श्रीः ।

वाग्भटप्रणीतम्

# अलंकारशास्त्रम् ।

## प्रथमः परिच्छेदः ।

श्रियं दिशतु वो देवः श्रीनाभेयजिनः सदा ॥
मोक्षमार्गं सतां ब्रूते यदागमपदावली ॥ १ ॥

श्रीमाञ्छ्रीआदिनाथः श्रियमिह दिशतु श्रेयसीं भूयसीं वो
बिभ्राणः सौरभेयं ह्रदमभययशिवः शङ्करः शङ्कराभः ।
सेव्यो भूतैर्विभूत्या परिकलिततनुर्वर्णनीयो ह्यहीनै
र्बिभ्रद्वर्णसुवर्णं तुहिनशिखरिणो भाति यः कामतेजाः ॥१॥

प्रभावविभवावासं प्रतिभादानदक्षिणम् ॥
स्पृशामि शिरसा सोसौ गुरुपादरजः कणः ॥ २ ॥

बालानामवबोधाय स्वस्यार्थस्मरणाय च ॥
वाग्भटालंकृतौ कुर्वे व्याख्यां संक्षेपयुक्तितः ॥ ३ ॥

तत्र शास्त्रस्य निर्विघ्नेन परिसमाप्त्यर्थं श्रीबाहडदेवो विशिष्टेष्टदेवतानमस्कारमाह । श्रियमिति ।श्रीनाभेयजिनो वो युष्मभ्यं श्रियं दिशतु । किंविशिष्टो देवः दीव्यति क्रीडति परमानन्दपदे इति देवः । यस्य भगवतः आगमपदावली सिद्धान्तपरम्परा सतां सत्पुरुषाणां मोक्षमार्गं ब्रूते सिद्धेः पन्थानं वदति । अन्यापि पदावली मार्गं ब्रूते प्रकाशयतीत्युक्तिदेशः ॥ १ ॥

साधुशब्दार्थसंदर्भं गुणालङ्कारभूषितम् ॥
स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्तये ॥ २ ॥
प्रतिभाकारणं तत्र व्युत्पत्तिस्तु विभूषणम् ॥
भृशोत्पत्तिकृदभ्यास इत्याद्यकविसंकथा ॥ ३ ॥
प्रसन्नपदनव्यार्थयुक्तिबोधविधायिनी ॥
स्फुरन्ती सत्कवेर्बुद्धिः प्रतिभा सर्वतोमुखी ॥ ४ ॥

साध्विति । एवंविधं काव्यं कीर्तये कुर्वीत वृत्तं यशसे विदधीत । काव्यस्यानेकगुणत्वेपि कीर्तेरेव ग्रहणं मुख्यत्वार्थम् । तदुक्तम् ।

"काव्यं यशसेर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ।"

साधु किंविशिष्टं साधुशब्दार्थसंदर्भम् । अर्थश्च शब्दश्च शब्दार्थौ तयोः संदर्भः रचना साधुः प्रधानः शब्दार्थसंदर्भो यस्मिन् तत्तथा । पुनः किंविशिष्टं । गुणालङ्कारभूषितम् । गुणैरौदार्यादिभिः अलङ्कारैश्चित्रादिभिः भूषितं । पुनः किंविशिष्टम् । स्फुटरीतिरसोपेतं स्फुटाभिः प्रकटाभिः रीतिभिर्गौड्यादिभिः रसैः शृङ्गारादिभिः उपेतं सहितम् ॥ २ ॥

प्रतिभेति । आथकवीनां पुराणकाव्यकर्तॄणां संकथा वार्ता शिक्षा वा इति वर्तते । इतीति किम् । तस्य काव्यस्य प्रतिभा बुद्धिः कारणं भवति । तु पुनः व्युत्पत्तिरनेकशास्त्रपरिज्ञानं तस्य काव्यस्य विभूषणं स्यात् । अभ्यासः भृशोत्पत्तिकृत् शीघ्रोत्पादनकारी स्यात् ॥ ३ ॥

प्रसन्नेति । पूर्वमुद्दिष्टां प्रतिभां लक्षयति । सत्कवेर्बुद्धिः प्रतिभेत्युच्यते । किंभूता प्रसन्नानि सुललितानि पदानि नव्या नवीना निश्चयार्थास्तेषां युक्तयः तासामुद्बोधः परिज्ञानं तस्य विधायि-

पश्चाद्गुरुत्वं संयोगाद्विसर्गाणामलोपनम् ॥
विसन्धिवर्जनं चेति बन्धचारुत्वहेतवः ॥ ८ ॥
शिते कृपाणे विधृते त्वया घोरे रणे कृते ॥
त्र्यधीशक्षितिपा भीत्या वन एव गता जवात् ॥ ९ ॥
अनुल्लसन्त्यां नव्यार्थयुक्तावभिनवत्वतः ॥
अर्थसङ्कलनातत्त्वमभ्यसेत्संकथास्वपि ॥ १० ॥
आगम्यतां सखे गाढमालिङ्ग्यात्र निषीद च ॥
संदिष्टं यन्निजभ्रातृजायया तन्निवेदय ॥ ११ ॥

पश्चादिति । पदावल्या पदपरम्परया इति । बन्धचारुत्वहेतवो भवन्ति । इतीति किम् । संयोगात्पश्चाद्गुरुत्वं क्रियते । विसर्गाणां अलोपनं स्थितिं विदधीत । विरुद्धसन्धिवर्जनं च क्रियते । सति इत्यादि ॥ ८ ॥

अत्रोदाहरणं शित इति । त्र्यधीश नरपते क्षितिपा राजानः भीत्या भयेन वन एव गताः। क सति त्वया शिते तीक्ष्णे कृपाणे खड्गे विधृते सति। पुनः क सति संग्रामे घोरे रौद्रे कृते सति त्र्यधीश इति संयोग इत्थं न क्रियते वने एवेति विसन्धिर्ज्ञेयः । विरूपसन्धिवर्जनं त्र्यधीशेति विसन्धिः । क्षितिपा अत्र विसर्गलोपनं विधृतेत्र गुरुत्वं विलोक्यते विसर्गाणामलोपनं कृतमित्थमत्र न क्रियते ॥ ९ ॥

अन्विति । संकथासु वार्तास्वपि अर्थसङ्कलनात्तत्त्वं अर्थस्य योजनास्वरूपं अभ्यसेत् । क सति नव्यार्थयुक्तावनुल्लसन्त्यां अनुत्पत्तौ सन्त्यां कुतः अभिनवत्वतः नवीनत्वात् नूतनकवेर्भावात् ॥ १० ॥

आगम्यतामिति । हे सखे हे मित्रआगम्यतां भृशमालिङ्ग्य अत्र निषीद उपविश यन्निजभ्रातृजायया मम कलत्रेण संदिष्टं यत्ते तन्निवेदय कथय ॥ ११ ॥

एकस्यैवाभिधेयस्य समासं व्यासमेव च ॥
अभ्यसेत्कर्तुमाधानं निःशेषालंक्रियास्वपि ॥ १६ ॥
स्यादनर्धान्तपादान्तेप्यशैथिल्ये लघुर्गुरुः ॥
पादादौ न च वक्तव्याश्चादयः प्रायशो बुधैः ॥१७॥
भुवनानि निबध्नीयात्त्रीणि सप्त चतुर्दश ॥
अप्यदृश्यां सितां कीर्तिमकीर्तिं च ततोन्यथा॥१८॥

एकस्यैवेति । एकस्यैवाभिधेयस्य वर्ण्यमानस्य काव्यस्य समासं संक्षेपं व्यासं विस्तरमेव कर्तुमभ्यसेत् । च पुनः निःशेषालङ्कारेषु सर्वालङ्कारेषु एकस्यैवाभिधेयस्य वर्ण्यवस्तुनः आधानं कर्तुं आरोपणं कर्तुं अभ्यसेत् । समासेनाह यथा ।

ढक्काध्वनिप्रतिध्वानमुखरास्त्वद्रिपून् भयात् ॥
लीयमानान् निकुञ्जेषु वारयन्तीव पर्वताः ॥

व्यासेन यथा ।

यात्रारम्भभयातकानकशतध्वानं प्रतिध्वानत-
स्तस्योच्छेदपराभवागममभी सम्भाव्यशङ्काकुलाः ॥
त्रासावेशवशाद्दिशन्तमधुनात्वद्वैरिराजव्रजं
दूरादेव निराकरिष्णव इव स्वस्मिन्विभान्त्यद्रयः॥१६॥

स्यादिति । लघुरपि गुरुःस्यात् । क्वसति अशैथिल्ये सति निबिडबन्धे सति । क्व अनर्धान्तपादान्तेपि प्रथमतृतीयपादान्तेपि अपि शब्दात् द्वितीयचतुर्थपादान्तेपि गुरुः सर्वच्छन्दस्सु लघुरपि गुरुर्भवेत् । बुधैर्विद्वद्भिः पादादौ बाहुल्येन चादयोऽव्ययरूपा न प्रयोक्तव्याः। प्रायश इति ग्रहणात् हे आर हन्त हो अहो प्रभृतीनां न दोषः ॥ १७ ॥

भुवनानीति । भुवनानि जगन्ति त्रीणि बध्नीयात् अथ वा सप्त

वारणं शुभ्रमिन्द्रस्य चतुरः सप्त वाम्बुधीन् ॥
चतस्रः कीर्तयेद्वाष्टौ दश वा ककुभः क्वचित् ॥ १९ ॥
यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित् ॥
नानुस्वारविसर्गौ च चित्रभङ्गाय संमतौ ॥ २० ॥
शङ्कमानैर्महीपालकारागारविडम्बनम् ॥
त्वद्वैरिभिः सपत्नीकैः श्रितं बहुविडम्बनम् ॥ २१॥
त्वया दयार्द्रेण विभो रिपूणां न केवलं संयमिता न बालाः॥
तत्कामिनीभिश्च वियोगिनीभिर्मुहुर्महीपातविधूसराङ्गाः २२

२ रसातलं ३ सुतलं ४ नितलं ५ तलातलं ६ पातालं ७ ॥
भूर्लोकः १ भुवर्लोकः २ स्वर्लोकः ३ महर्लोकः ४ जनलोकः ५ तपोलोकः ६ सत्यलोकः ७ इति । अदृश्यामपि कीर्तिं सितां धवलां निबध्नीयात् । च पुनः अकीर्तिं ततोन्यथा कृष्णां निबध्नीयात् ॥ १८ ॥

वारणमिति । इन्द्रस्य वारणं गजेन्द्रं शुभ्रं कीर्तयेत् । अम्बुधीन् चतुरः सप्त वा कीर्तयेत् । कुकुभो दिशः चतस्रः कीर्तयेत् अष्टौ वा क्वचिद्दश ॥ १९ ॥

यमकेति । अत्र सुगमं । न भित् न भेदः ॥ २० ॥

शङ्कमानैरिति । हेमहीपाल त्वद्वैरिभिर्वनं श्रितं किम्भूतैः कारागारविडम्बनं शङ्कमानैः गुप्तगृहान्तःक्षेपण विचिन्तयाद्भिः पुनः किंभूतैः सपत्नीकैः सकलत्रैः । वनं किंविधम् बहूनि विलानि सर्पकोलकादिकृतानि यत्र तत्तथा । अत्र यमके बवयोर्डलयोरैक्यम् ॥ २१ ॥

त्वयेति । हेविभो हेराजन्द्र केवलं रिपूणां बालाः अर्भकाः स्त्रियो वा दयार्द्रेण सता त्वया न संयमिता न बद्धा इति न किन्तु तत्कामिनीभिर्वियोगिनीभिः वालाः केशा न संयमिताः। किंभूताः बालाः स्त्रीकेशाश्च मुहुर्वारंवारं महीपातनविधूसरं अङ्गं यासां येषां वा तास्ते वा तथा अत्रश्लेषे बवयोरेक्यम् ॥ २२ ॥

देव युष्मद्यशोराशिं स्तोतुमेनं जडात्मकम् ॥
उत्कण्ठयति मां भक्तिरिन्दुलेखेव सागरम् ॥ २३ ॥

चन्द्रेडितं चलुठितस्वरधीतसार-
रत्नासनं रभसकल्पितशोकजातम् ॥
पश्यामि पापतिमिरक्षयकारकाय-
मल्पेतरामलपतः कचलोपलोचम् ॥ २४ ॥

देवेति । अश्लेषे च बवयोरैक्यं दर्शयति। तथा हे देव एनं मां भक्तिरुत्कण्ठयति । किं कर्तुम् । युष्मद्यशोराशिं स्तोतुं किंभूतं मां जडात्मकं मूर्खस्वभावम् । केवलं इन्दुलेखेव सागरं यथा चन्द्रलेखा समुद्रमुत्कण्ठयति कण्ठादूर्ध्वंकरोतीत्यर्थः । किंविकरोति वृद्धिमन्तं सागरं जलात्मकं जलमयम् ॥ २२ ॥

चन्द्रेण्डितामिति अहं वीरं पश्यामि कथम्भूतं वीरं चन्द्रेणेडितं स्तुतम् । पुनः किं भूतं चटुलितस्वरधीतसाररत्नासनं स्वःस्वर्गेअधीतं पठितं सारं बलं यस्यासौ स स्वरधीतसारः इन्द्रः। रत्नैः खचितं आसनं। रत्नासनं चटुलितं कम्पितं स्वरधीरसारस्य पुरन्दरस्य रत्नासनं येन स तथा। भूयः किं पापतिमिरक्षयकारकायं पापमेव तिमिरं तस्य क्षयकारी कायो यस्य तम् । पुनः किं भूतं अल्पेतरामलतपः अल्पादितराणि बहूनि अमलानि तपांसि यस्य स तथा। कचानां केशानां लोपो अदर्शनं यस्मिन् स तथा कचलोपः लोचः दर्शनं यस्य स तथा । अल्पेतरामलतपाश्चासौ कचलोपलोचश्च तम् । अथ वा अल्पेतरामलतपोर्थं कचापनयनदर्शनं यस्य तथा । हारबन्धचित्रमिदम् ।

## हारबन्ध चित्रम् ।




**मचण्डबलनिष्कामप्रकाशितमहागम ॥**
**भावतत्त्वनिधे देव भालमत्राद्भुता तव ॥ २९ ॥**

डेति । हे देवात्र संसारे भालं ललाटं अद्भुतं वर्तते अथ न्तरे तव भा कान्तिरद्भुता वर्तते । हे प्रचण्डबल प्रचण्ड स तथा तस्य सम्बोधनं क्रियते । हे निष्काम हे हेत । हे प्रकाशितमहागम प्रकाशितो महागमो येन स सम्बोधनम् । हे भावतत्त्वविधे हे अन्तरङ्गतत्त्वनिधान । त्रे बवयोरैक्यम् ॥ २९ ॥

छत्रबन्धचित्रम् ।




भवकाननमत्तेभभग्नमायातमःप्रभ ॥

विनयात् त्वां स्तुवे वीर विनतत्रिदशेश्वर ॥२६॥

भवकाननेति क्षिप्तोयं श्लोकः। तस्य व्याख्या । भवः संसारः तदेव काननं वनं तत्र मत्तेभ उन्मत्तगजः तत्सम्बोधनं संसाराटवीनिर्मूलनकर इत्यर्थः । किञ्च भग्नं मायारूपं तमो यया एतादृशी प्रभा यस्येति विनतः नम्रस्त्रिदशेश्वरो देवेन्द्रो यस्येति । हे वीर अहं विनयात् त्वां भवन्तं स्तुवे स्तवनं करोमीत्यर्थः॥ २६ ॥

छत्रबन्धचित्रम् ।




अधीत्य शास्त्राण्यभियोगयोगा-
दभ्यासवश्यार्थपदप्रपञ्चः ॥
तंतं विदित्वा समयं कवीनां
मनःप्रसत्तौ कवितां विदध्यात् ॥ २७ ॥

इति वाग्भटालंकारे प्रथमः परिच्छेदः ।

अधीत्येति । कविः कवितां विदध्यात् । कविरिति सामर्थ्याद्ग-
ते । किं कृत्वा अभियोगयोगात् शास्त्राण्यधीत्य पठित्वा
भूतः कविः अभ्यासेन वश्यः वशङ्गतः अर्थप्रपञ्चो यस्य
तथा । किं कृत्वा कवीनां तंतं समयं शास्त्रं विदित्वा ज्ञा-
। क्व सति मनःप्रसत्तौ चित्तनिर्मलतायां सत्याम् ॥ २७ ॥

इति वाग्भटालंकारे टीकायां प्रथमः परिच्छेदः ॥ १ ॥

संस्कृतं प्राकृतं तस्यापभ्रंशो भूतभाषितम् ॥
इतिभाषाश्चतस्रोपि यान्ति काव्यस्य कायताम् ॥ १ ॥
संस्कृत स्वर्गिणां भाषा शब्दशास्त्रेषु निश्चिता ॥
प्राकृतं तज्जनतुल्यं देश्यादिकमनेकधा ॥ २ ॥
अपभ्रंशस्तु यच्छुद्धं तत्तद्देशेषु भाषितम् ॥
यद्भूतैरुच्यते किंचित्तद्भौतिकमिति स्मृतम् ॥ ३ ॥
छन्दोनिबद्धमच्छन्द इति तद्वाङ्मयं द्विधा ॥
पद्यमाद्यन्तदन्यच्च गद्यं मिश्रं च तद्द्वयम् ॥ ४ ॥

संस्कृतमिति । चतस्रोपि भाषास्तस्य काव्यस्य कायतां यान्ति । इतीति किम् । संस्कृतं प्राकृतं तस्य प्राकृतस्य लक्षणादपभ्रंशः भूतभाषितं पैशाचिकं मागधी शूरसेनी प्राकृते इति भाषा बहवोपि भवन्ति देशभाषाः सर्वाः प्राकृते अपि समुच्चये काव्यस्य स्वरूपतां यान्तीत्यर्थः ॥ १ ॥

संस्कृतमिति । स्वर्गिणां देवानां भाषासंस्कृतमित्युच्यते । किंभूता भाषाशब्दशास्त्रेषु व्याकरणेषु निश्चिता निर्धारीकृता। प्राकृतमनेकधा भवति एकं तज्जं तस्मात् संस्कृताज्जातं तज्ज शुद्धप्राकृतमित्यर्थः भवति । अपरं तत्तुल्यं तेन संस्कृतेन तुल्यं मात्रावर्णभेदाभिन्नमित्यर्थः । ततो देश्यादिकं देशेषु कर्णाटादिषु भव देश्यं एवमनेकधा भवति आदिशब्दात्सौरसेनीमागध्यौ॥ २॥

अपभ्रंश इति। यत्तत्र देशेषु कर्णाटादिषु शुद्धं भाषितं भवति सोपभ्रंशः स्यात् ।यत्किञ्चित् भूतैरुच्यते तद्भौतिकं स्मृतम् ॥३॥

छन्द इति । इत्यमुना प्रकारेण वाङ्मयं शास्त्रं द्विधा भवति एकं छन्दोनिबद्धं मात्रावर्णभेदेन द्वितीयमच्छन्दः । आद्यं छन्दोनिबद्धं पद्यमुच्यते । च पुनस्तदन्यदच्छन्दो गद्यमुच्यते । च पुनर्गद्यपद्ययोर्द्वयं तत् द्वयं छन्दोनिबद्धाच्छन्दसोर्द्वयं मिश्रं

अदुष्टमेव तत्कीर्त्यै स्वर्गसोपानपङ्क्तये ॥
परिहारांस्ततो दोषांस्तानेवादौ प्रचक्ष्महे ॥ ५ ॥
अनर्थकं श्रुतिकटु व्याहृतार्थमलक्षणम् ॥
स्वसंकेतप्रक्लृप्तार्थमप्रसिद्धमसन्मतम् ॥ ६ ॥
ग्राम्यं यच्च प्रजायेत पदं तन्न प्रयुज्यते ॥
क्वचिदिष्टा च विद्वद्भिरेषामप्यपदोषता ॥ ७ ॥
प्रस्तुतेनुपयुक्तं यत्तदनर्थकमुच्यते ॥
यथा विनायकं वन्दे लम्बोदरमहं हि तु ॥ ८ ॥

कथ्यते । गद्यपद्यमयं चम्पूकथादि । अथ वा तयोः संस्कृतप्राकृतयोर्द्वयं नाटकादि मिश्रमुच्यते ॥ ४ ॥

अदुष्टमिति । तत्काव्यं अदुष्टमेव निर्दोषमेव कीर्त्यै भवति । कीर्त्यै किंविशिष्टायै स्वर्गसोपानपङ्क्तिरिव स्वर्गसोपानपङ्क्तिस्तस्यै अतः कारणात् तानेव दोषानादौ प्रथमं प्रचक्ष्महे जल्पामः । किंभूतान् दोषान् परिहार्यान् ॥ ५ ॥

अनर्थकमिति । ग्राम्यं यत्पदमनर्थकं प्रजायेत तत्पदं न प्रयुज्यते एवं सर्वत्र योज्यम् । क्वचित्क्वापि पण्डितैरेषामनर्थकादीनामप्यदोषता ईप्सिता अनुवादापहासादौ । यथा ।

" मुखं चन्द्रश्रियं धत्ते श्वेतश्मश्रुकराङ्कुरैः ।
अत्र हास्यरसोद्देशो ग्राम्यं च गुणतां गतम् ॥ १ ॥

युग्मम् ॥ ६ ॥ ॥ ७ ॥

अथ दोषाणां स्वरूपं कथयन्नाह । प्रस्तुते प्रस्तावापन्ने वाक्ये यदनुपयुक्तं अनुपयोगि भवति तदनर्थकं दूषणमुच्यते । यथेत्युदाहरणोपन्यासे । अहं विनायकं वन्दे लम्बोदरमिति नामान्तरं अनर्थकम् । हि तु इति पादपूरणार्थकम् । यत्तु वक्ता हर्षभयादिना द्वित्रिः प्रयुङ्क्ते न तत्रायं दोषः । यथा जयजयेति शब्दो

निष्ठुराक्षरमत्यन्तं बन्धैः श्रुतिकटु स्मृतम् ॥
एकाग्रमनसा मन्ये स्त्रष्ट्रेयं निर्मिता यथा ॥ ९ ॥
व्याहतार्थं यदिष्टार्थबाधकार्थान्तराश्रयम् ॥
रतस्त्वमेव भूपाल भूतलोपकृतौ यथा ॥ १० ॥
शब्दशास्त्रविरुद्धं यत्तदलक्षणमुच्यते ॥
मानिनीमानदलनो यथेन्दुर्विजयत्यसौ ॥ ११ ॥

विना हर्षं न प्रतीयते अहिरहिरित्यादिषु येन पुनरुक्तत्वं पौन
त्त्यमपि अनर्थकं दोषेन्तर्भवति ॥ ८ ॥

निष्ठुरेति । यदत्यन्तं निष्ठुराक्षरं कठोराक्षरं स्यात् तद्ब
पदं श्रुतिकटु कर्णदुःखावहं स्मृतं कथितं यथा अहमेवं मन्ये
काचिन्मनोहरा स्त्री स्त्रष्ट्रा विधात्रा एकाग्रमनसा सता सावध
नचेतसा ननु निश्चयेन निर्मिता मनोहरत्वात् । अत्र स्त्रष्ट्रेति
श्रुतिकटु वर्तते ॥ ९ ॥

व्याहतार्थमिति । इष्टार्थं प्रतिपादयितुमीप्सितोर्थस्तस्य
धकं यदर्थान्तरं आश्रयति तत् इष्टार्थबाधकार्थान्तराश्रयं तत
दं व्याहतार्थमुच्यते । यत्पदमिष्टार्थं तद्विरुद्धमर्थान्तरं चाभि
त्ते तद्व्याहतार्थमिति भावः । उत वा मूलार्थं मुक्त्वा यत्पद
न्यार्थं भजते तत् व्याहतार्थम् । यथा हे भूपाल हे राजन्
तलोपकृतौ पृथ्वीतलोपकारित्वे त्वमेव रत आसक्तः इति इष
र्थः । अथ च भूतानां प्राणिनां लोपो मारणं तस्य कृतौ कर
त्वमेव रतः । इत्यनिष्टार्थः ॥ १० ॥

शब्देति । यत्पदं शब्दशास्त्रविरुद्धं तत्पदमलक्षणमुच्यते
यथा इन्दुश्चन्द्रमा असौ विजयति । किंभूत इन्दुः मानिनीमा
दलनः सर्वस्त्रीणां अहङ्कारविध्वंसकः। अत्र "विपराभ्यांजे" रि

स्वसङ्केतप्रक्लृप्तार्थज्ञेयार्थान्तरवाचकम् ॥
यथा विभाति शैलोयं पुष्पितैर्वानरध्वजैः ॥ १२ ॥
यस्य नास्ति प्रसिद्धिस्तदप्रसिद्धं विदुर्यथा ॥
राजेन्द्र भवतः कीर्तिश्चतुरो हन्ति वारिधीन् ॥१३॥
शक्तमप्यर्थमाख्यातुं यन्न सर्वत्र संमतम् ॥
असंमतं तमोम्भोजं क्षालयान्त्यंशवो रवेः ॥ १४ ॥

व्याकरणसूत्रेण आत्मनेपदे प्राप्ते विजयतीति परस्मैपदोपादनं व्याकरणविरुद्धम् ॥ ११ ॥

स्वेति । आत्मीयसङ्केतेन प्रक्लृप्तो रचितोऽर्थो यस्य तत्तथा भवति तदेव दूषणं नेयान् प्रतिपाद्यान् यदर्थान्तरं भिन्नोर्थः तस्य वाचकं यत्पदं भवति । यथा अयं शैलः पुष्पितैर्वानरध्वजैरर्जुनवृक्षैर्विभाति अत्र नेयो गम्योऽर्जुनवृक्षस्तस्मात् अर्थान्तरं पाण्डवोर्थस्तद्वाचकं वानरध्वजेतिपदं न पुनरर्जुनवृक्षस्य अतः स्वसङ्केतप्रक्लृप्तार्थमिदम् ॥ १२ ॥

यस्येति । यस्य शब्दस्य यस्मिन्नर्थे प्रसिद्धिर्नास्ति तदप्रसिद्धं विद्वांसो विदुः । यथा हे राजेन्द्र तव कीर्तिश्चतुरो वारिधीन् समुद्रान् हन्ति गच्छति 'अत्र हनहिंसागत्यो'रित्यनेन हन्तेः सिद्धेपि गमनार्थे अप्रसिद्धत्वात् कविप्रबन्धसमयेऽप्रयुज्यमानत्वात् गमनार्थे ह्यप्रयोगः ॥ १३ ॥

शक्तमिति । अर्थमाख्यातुं शक्तमपि यत् सर्वशास्त्रेषु न संमतं तदसन्मतम् । यथेत्यध्याहारः । रवेरंशवस्तमोम्भोजं अन्धकारकर्दमं अम्भसो जातं अम्भोजं कर्दमं इत्यन्वर्थेन मिलति परं विदुषामम्भोजशब्दः कमले सन्मतः न पङ्के अपूर्वस्मृतिविस्मरणप्रसिद्धो न तु प्रकृष्टस्मरपूर्वस्थाचलने एव न प्रकृष्टे स्थाने आङ् पूर्वो वहतिः करणे नतु वहने संमत इत्यादि ॥ १४ ॥

यद्यत्रानुचितं तद्धि तत्र ग्राम्यं स्मृतं यथा ॥
छादयित्वा सुरान् पुष्पैः पुरो धान्यं क्षिपाम्यहम् १५
पदात्मकत्वात् वाक्यस्य तद्दोषाः सन्ति तत्र हि ॥
अपदस्थास्तु ये वाक्यदोषास्तान् ब्रूमहेधुना ॥१६॥
खण्डितं १ व्यस्तसम्बन्ध २ मसंमित ३ मपक्रमम् ४ ॥
छन्दो ५ रीति ६ यति ७ भ्रष्टं दुष्टं८वाक्यमसत्क्रियम्१७
वाक्यान्तरप्रवेशेन विच्छिन्नं खण्डितं मतम् ॥
यथा पातु सदा स्वामी यमिन्द्रः स्तौति वो जिनः१८

यदीति । यद्यत्र स्थाने अनुचितमयोग्यं भवति । तत् ग्राम्यं स्मृतं यथेत्यध्याहारः । अत्र छादयित्वेति अबोध्यं अयोग्यं पुरो धान्यं क्षिपामीत्यपि अयुक्तम् । कुसुमैर्देवान् पूजयित्वा बलिं ढौकयामि एतद्योग्यं तथा वटवन्दकसंस्थित इत्यादयो ग्राम्या एवं सतां सभायां अनुचितत्वात् । भगिनी भगवती शिवलिङ्गादयस्तु लोकप्रतीतत्वात् न दोषाय । उक्तं च ।

" लोकवत्प्रतिपत्तव्यो लौकिकोर्थो बुधैरिह " ॥
प्रतिलोकव्यवहारसदृशौ बालपण्डितौ ॥ १ ॥

क्वचिदनेर्थकादीनामपि अदोषताभिहितानुकरणादौ ॥ १५॥

पदेति । तत्र वाक्ये तद्दोषाः पददोषाः सन्ति कुतः वाक्यस्य पदात्मकत्वात् । पदसमूहो वाक्यं कथ्यते ये तु दोषा अपदस्थाः पदेष्वेव न वर्तमाना वाक्यदोषा भवन्ति तान् वाक्यदोषानधुना सम्प्रति अष्टौ ब्रूमहे जल्पामः ॥ १६ ॥

ते क इत्याह । एवंविधं खण्डितं वाक्यं दुष्टं सदोषम्॥१७॥

वाक्यान्तरेति । वाक्यमुक्तिरन्तराले अन्यवाक्यप्रदेशेन विच्छिन्नं सत् खण्डितं स्यात् यथा जिनः स्वामी वो युष्मान् पातु

सम्बन्धिपददूरत्वे व्यस्तसम्बन्धमुच्यते ॥
यथाद्यः सम्पदं ज्ञाता देयात्तत्त्वानि वोर्हताम् ॥१९॥
शब्दार्थौ यत्र न तुलाविधृताविव सम्मितौ ॥
तदसम्मितमित्याहुर्वाक्यं वाक्यविदो यथा ॥२० ॥
मानसौकःपतद्यानदेवासनविलोचनः ॥
तमोरिपुविपक्षारिप्रियां दिशतु वो जिनः ॥ २१ ॥

इन्द्रोयं जिनं सदा स्तौति इदं वाक्यान्तरं अनेन विच्छिन्नत्वात् खण्डितम् ॥ १८ ॥

सम्बन्धीति । परस्परसम्बान्धिनां पदानां दूरत्वेति सति व्यस्तसम्बन्धं कथ्यते । यथा अर्हताम् आद्यः श्रीऋषभो वो युष्यभ्यं सम्पदं देयात् । किंभूतः तत्त्वानि ज्ञाता अत्रार्हतां आद्यः तत्त्वानि ज्ञाता अर्हतां सम्बन्धः पृथग्भूतत्वमित्यादि ज्ञेयः ॥ १९ ॥

शब्दार्थाविति । यत्र शब्दार्थौ तुलाविधृताविव सम्मितौ तुल्यावेव भवतः । यथा तुलाविधृते वस्तुनी सम्मिते भवतः तद्वाक्यम् । वाक्यविदो विद्वांसः असम्मतमित्याहुः ॥ २० ॥

मानसेति । यथा जिनो वो युष्मभ्यं तमोरिपुः सूर्यः तद्विपक्षो राहुः तदारिः श्रीविष्णुस्तत्प्रियां लक्ष्मीं दिशतु । कथंभूतः मानसौकःपतद्यानदेवासनविलोचनः मानते सरोवरे ओको गृहं यस्यासौ मानसौकाश्चासौ पतंश्च पक्षी च मानसौकःपतन् राजहंसः स एव यानं वाहनं यस्य स तथा स चासौ देवश्च ब्रह्मा तस्यासनं कमलं तद्वद्विशिष्टे लोचने स तथा कमलविलोचन इति स्वल्प एवार्थे परम्पराबाहुल्यमल्पार्थत्वादसं मतम् ॥ २१ ॥

अपक्रमं भवेद्यत्र प्रसिद्धक्रमलङ्घनम् ॥
यथा भुक्त्वा कृतस्नानो गुरून् देवांश्च वन्दते ॥२२॥
छन्दःशास्त्रविरुद्धं यच्छन्दोभ्रष्टं हि तद्यथा ॥
स जयति जिनपतिः परब्रह्म महानिधिः ॥ २३ ॥
रीतिभ्रष्टमनिर्वाहो यत्र रीतेर्भवेद्यथा ॥
जिनो जयति स श्रीमानिन्द्राद्यमरवन्दितः ॥ २४॥
पदान्ता विरतिः प्रोक्ता यतिभ्रष्टमिदं यथा ॥
नमस्तस्मै जिनस्वामिने सदा नेमयेऽर्हते ॥ २५ ॥

अपेति । तदा अपक्रमं भवेत् यत्र प्रसिद्धक्रमलङ्घनं क्रियते । यथा स्नात्वा देवान् पूजयित्वा गुरून् वन्दित्वा च भोक्तव्यमिति क्रमः विपरीतकरणे क्रमलङ्घनम् ॥ २२ ॥

छन्द इति । यत् काव्यं छन्दःशास्त्रविरुद्धं भवति हीति निश्चितं तत् छन्दोभ्रष्टं कथ्यते । यथा स जिनपतिर्जयति किं बिशिष्टः परब्रह्मस्वरूपस्य महन्निधानं अत्र श्लोके तृतीयपादे श्लोकस्य लक्षणं नास्ति । तस्य लक्षणं चेदं 'पञ्चमं लघु सर्वत्र। नभौ गणौ न पादादौ' ॥ २३ ॥

रीतिभ्रष्टमिति । यत्र प्रारब्धाया रीतेरनिर्वाहो भवेत् तद्रीतिभ्रष्टं स्यात् । यथा । स श्रीमान् जिनो जयति । किंविशिष्टः इन्द्रादिदेववन्दितः । अत्र प्रथमपादे असमस्तपदत्वात् वैदर्भी रीतिः । द्वितीयपादे भूयः समासवशात् गौडीया रीतिः ।

"द्वित्रिपदा पाञ्चाली लाटीया सप्त वा यावत्" ॥
शब्दाः समासवन्तो भवति यथासंख्यगौडीया ॥१॥२४॥

पदान्तेति । विभक्त्यन्तं पदं पदान्तः पदमध्ये विरतिर्यत्र तत्तथा । यत् पदं पदान्तर्विरति स्यात् बुधैस्तदिदं यतिभ्रष्टं प्रोक्तम् । यथा तस्मै नेमये नमः जिननाथाय तस्मै अर्हते अत्र स्वामिने इति पदे पदमध्ये च यतिः ॥ २५ ॥

सत्क्रियापदहीनं यत् तदसत्क्रियमुच्यते ॥
यथा सरस्वतीं पुष्पैः श्रीखण्डैर्घुसृणैः स्तवैः ॥२६॥
देशकालागमावस्थाद्रव्यादिषु विरोधिनम् ॥
शास्त्रेष्वर्थं न बध्नीयाद्विशिष्टं कारणं विना ॥२७॥

यथा ।

प्रवेशे चैत्रस्य स्फुटकुटजराजिस्मितदिशि
प्रचण्डे मार्तण्डे हिमकणसमानोष्ममहसि ॥
जलक्रीडायातं मरुसरसि बालद्विपकुलं
मदेनान्धं विध्यन्त्यसमशरपातैः प्रशमिनः ॥ २८ ॥

सत्क्रियेति । यत्काव्यमसत्क्रियं शुद्धक्रियापदविहीनं तदसक्रियं कथ्यते । यथा सरस्वतीं देवीं पुष्पैः श्रीखण्डैर्वुसृणैः स्तवनैः पूजयामि विलिम्पामि स्तौमीत्यादि क्रिया अत्र विलोक्यन्ते न विद्यते सति मङ्गलार्थे क्रिया यस्मिन् इत्यन्वर्थाश्रवणान्मङ्गलार्थे क्रियाहीनत्वेपि क्वचिन्न दोषः । यथा ।

" महाभुजास्तरङ्गिण्यो मृगेन्द्राः क्रोडदन्तिनः ॥
भवन्तं वर्त्म सम्प्राप्तं पन्थानः सन्तु ते शिवाः"॥ १ ॥

अत्र दाक्षुः नेप्दु(?)दार्षुः रोत्सुरिति क्रियाणामभावेपि न दोषः क्रियागुप्तके पुनरसत्त्वमेव । गुप्तक्रियायाः सद्भावादिति ॥२६॥

देशेति । एवंविधानर्थान् वाक्येषु न बध्नीयात् । देशविरोधिनः कालविरोधिनः आगमविरोधिनः द्रव्यविरोधिनः आदिशब्दात् गुणजातिक्रियादयो गृह्यन्ते । विशेषहेतुं विना॥२७॥

वाक्यानां दोषानाह । प्रवेश इति । प्रवेशे चैत्रस्य देशा-

इति दोषविषनिषेकैरकलङ्कितमुज्ज्वलं सदा विबुधैः ॥
कविहृदयसागरोत्थितममृतमिवास्वाद्यते काव्यम् ॥२९॥

## इति वाग्भटालङ्कारे द्वितीयः परिच्छेदः॥२॥

—००—

## तृतीयः परिच्छेदः ।

**अदोषावपि शब्दार्थौ प्रशस्येते नयैर्विना ॥**
**तानिदानीं यथाशक्ति क्रमोभिव्यक्तये गुणान् ॥१॥**

च तत्तटं अनेन इत्युक्तं यदस्य राज्ञोऽकीर्तयो न सन्ति एवं न केनचिदुद्गीयन्त इति ॥ २८ ॥

इति दोषेति । सर्वदा विबुधैः काव्यममृतमिवास्वाद्यते किंभूतं तत् इति अमुना प्रकारेण पूर्वोक्ता ये दोषास्त एव विषाणि तेषां निषेकैः संभिन्नैर्मिश्रीभावैरकलङ्कितमदूषितं निर्मलं कवीनां हृदयमेव सागरस्तस्मादुत्पन्नममृतमपि विषानलं कृतं विबुधैर्देवैरासेव्यते उज्ज्वलं सागराच्चोत्पन्नं भवति ॥ २९ ॥

**इति खरतरगच्छे जिनवर्द्धनसूरिविरचितायां वाग्भटालंकारटीकायां द्वितीयः परिच्छेदः ॥ २ ॥**

—००—

अथ दशगुणानौदार्यादीनुदज्जिहीर्षुराह अदोषाविति । वयं तान् गुणान् साम्प्रतं जल्पामः । किमर्थम् । अभिव्यक्तये प्रकटीभावाय यैर्गुणैर्विना अदोषावपि शब्दार्थौ न प्रशस्येते प्रशस्तौ न भवतः । अभिव्यक्तये इति । तादर्थ्ये चतुर्थी तेन यद्यपि दोषाणामभावा एव गुणान् साधयन्ति तथापि कति ते इति किं स्वरूपा इत्यभिव्यक्तिर्न स्यादतो ब्रूम इति सम्बन्धः ॥ १ ॥

औदार्यं समता कान्तिरर्थव्यक्तिः प्रसन्नता ॥
समाधिः श्लेष ओजोथ माधुर्यं सुकुमारता ॥ २ ॥
पदानामर्थचारुत्वं प्रत्यायकपदान्तरैः ॥
मिलितानां यदाधानं तदौदार्यं स्मृतं यथा ॥ ३ ॥

गन्धेभविभ्राजितधाम लक्ष्मी-
लीलाम्बुजच्छत्रमपास्य राज्यम् ॥
क्रीडागिरौ रैवतके तपांसि
श्रीनेमिनाथोत्र चिरं चकार ॥ ४ ॥

औदार्यमिति । औदार्यादीनां गुणानां क्रमेण दश नामानि ज्ञातव्यानि ॥ २ ॥

पदानामिति । अद्य चैतेषां गुणानां लक्षणोदाहरणे क्रमेणाह । तदौदार्यगुणः स्मृतं यत् एवंविधानां पदानां आधानं भणनं क्रियते । किंभूतानां अर्थचारुत्वम् । अर्थस्य उक्तवस्तुनः प्रधानत्वख्यापकैः पदान्तरैः मिलितानां मिश्रीकृतानाम् ॥ ३ ॥

अस्योदाहरणं यथा । गन्धेभेति । अत्र रैवतके गिरिनारपर्वते श्रीनेमिनाथश्चिरकालं तपांसि चक्रे क्रीडागिरौ क्रीडायोग्यपर्वते राज्यं त्यक्त्वा गन्धहस्तिभिर्विराजितं धाम गृहं यस्मिन् तत्तथा लक्ष्मीलीलाम्बुजछत्रम् लीलालक्ष्म्याः लीलाम्बुजमिव छत्रं यस्मिन् तत्तथा अत्र गन्धशब्देन इभानां चारुत्वं लीलाशब्देन अम्बुजस्य चारुत्वं क्रीडाशब्देन गिरेश्चारुत्वं श्रीशब्देन नेमेश्चारुत्वं प्रतिपादितं इभादिशब्दचारुत्वप्रत्यायकैः गन्धलीलाक्रीडाश्रीशब्दैर्मिलितानां युक्तानां प्रतीतिहेतुत्वात् औदार्यं गुणकाव्यस्य ॥ ४ ॥

बन्धस्य यदवैषम्यं समता सोच्यते बुधैः ॥
यदुज्ज्वलत्वं च तस्यैव सा कान्तिरुदिता यथा॥५॥

कुचकलशविसारिस्फारलावण्यधारा-
मनुवदति यदङ्गासङ्गिनी हारवल्ली ॥
असदृशमहिमानं तामनन्योपमेयं
कथय कथमहं ते चेतसि व्यञ्जयामि ॥ ६ ॥

फलैः क्लृप्ताहारः प्रथममपि निर्गत्य सदना-
दनासक्तः सौख्ये क्वचिदपि पुराजन्मनि कृती ॥
तपस्यन्नश्रान्तं ननु वनभुवि श्रीफलदलै-
रखण्डैः खण्डेन्दोश्चिरमकृत पादार्चनमसौ ॥ ७ ॥

बन्धस्येति । बन्धस्य यत् अवैषम्यं सुकुमारता अनुल्बणकामस्य वर्णोपादानं भवति सा बुधैः समता उच्यते यत्तस्यैव बन्धस्य उज्ज्वलत्वं निर्मलता स्यात् सा बन्धस्य अवैषम्यं कान्तिर्नाम गुणं स्यात् विशुद्धिरूपं सन्धिप्रभृति बन्धनान्निराकरणात्कान्तिरित्युच्यते ॥ ५ ॥

समताया उदाहरणमाह । कुचेति । केनचिन्मित्रेण कस्याश्चिद्दृष्टपूर्वाया अवलोकनाय सखा प्रहितः स च तां दृष्ट्वा प्रत्यगात् तेन च पृष्टः कीदृशी सा तत् । आह स हे मित्र कथय अहं तां स्त्रियं तव चित्ते कथं व्यञ्जयामि प्रकटीकरोमि कथंभूतां निःसमानमहिमानं न अन्येन वस्तुना उपमेया तां यस्या अङ्गं यदङ्गं प्रस्तावात् हृदयं तस्य आसङ्गिनी हारलता स्तनघटाभ्यां निःसरन्तीं लावण्यधारां अनुवदाते अनुकरोति ॥ ६ ॥

अथ कान्तेरुदाहरणमाह फलैरिति । असौ कृती पूर्वजन्मनि खण्डेन्दोरीश्वरस्य श्रीफलदलैः बिल्ववृक्षपत्रैरखण्डैः सम्पूर्णैश्चिरं पादार्चनं अकृत अकार्षीत् प्रथममपि बाल्य एव गृहान्निसृत्य

यदनेयत्वमर्थस्य सार्थव्यक्तिः स्मृता यथा ॥
त्वत्सैन्यरजसा लुप्ते सूर्ये रात्रिरभूद्दिवा ॥ ८ ॥
झटित्यर्थार्पकत्वं यत्प्रसत्तिः सोच्यते यथा ॥
कल्पद्रुम इवाभाति वाञ्छितार्थप्रदो जिनः ॥ ९ ॥
स समाधिर्यदन्यस्य गुणोन्यत्र निवेश्यते ॥
यथाश्रुभिरस्त्रीणां राज्ञः पल्लवितं यशः ॥ १० ॥

फलैः कृताहारः क्वचिदपि सांसारिके सौख्ये नासक्तः आव्यारूढः वनभुवि निरन्तरं तपः कुर्वन् अश्रान्तं अखेदं यथाभवति उज्ज्वलत्वात् कान्तिगुणोयम् ॥ ७ ॥

यदिति । यदर्थस्य वस्तुनो नेयत्वं सुखगम्यत्वं यत्रानुक्तोप्यर्थो बलाद्गम्यते नेयत्वमनेयत्वं एतावता अर्थस्य यत्राक्षरैरेव प्रतिपादनं सार्थव्यक्तिर्ज्ञेया । यथोदाहरणम् । हे राजेन्द्र तव सेनारेणुना सूर्ये लुप्ते सति दिवसे रजनी अजनि । अथ वाऽनेयत्वं सुखगम्यत्वम् । यत्रार्थस्य नेयता तत्रदोषः । यथा ।

"चतुरङ्गे भवत्सैन्ये प्रसर्पति दिशः क्रमात् ॥
नरेन्द्रबहुलध्वान्ता दिवाप्याविरभून्निशा ॥ १ ॥

अत्र रात्रिकरणभूतस्य सूर्ये लुप्ते तत्साधकरजसो नेयत्वम् ॥८॥

झटितीति । यत् झटिति शीघ्रं अर्थार्पकत्वं सुबोधकत्वं सा प्रसत्तिरुच्यते । अत्रोदाहरणम् । कल्पवृक्ष इव शोभते वाञ्छितार्थप्रदः अभीष्टार्थप्रदस्तीर्थङ्करः ॥ ९ ॥

स समाधिरिति । यदन्यस्य वस्तुनोधर्मोन्यत्र निवेश्यते स समाधिः । उदाहरणम् । यथा अरिस्त्रीणामश्रुभिर्नृपस्य यशः पल्लवितं तद्धि लतावृक्षादीनां धर्मः स यशसि आरोप्यते ॥ १० ॥

श्लेषो यत्र पदानि स्युः स्यूतानीव परस्परम् ॥
ओजः समासभूयस्त्वं तद्गद्येष्वपि सुन्दरम् ॥ ११ ॥
मुदा यस्योद्गीतं सहसहचरीभिर्वनचरै-
र्मुहुः श्रुत्वा हेलोधृतधरणिभारं भुजबलम् ॥
दरोद्गच्छद्दर्भाङ्कुरनिकरदम्भात्पुलकिता-
श्चमत्कारोद्रेकं कुलशिखरिणस्तेपि दधिरे ॥ १२ ॥

समराजिरस्फुरदरिनरेशकरिनिकराशिरःसरससिन्दूरपूरपरिचयेनेवारुणितकरतलो देव इति १३

सरसार्थपदत्वं यत्तन्माधुर्यमुदाहृतम् ॥
अनिष्ठुराक्षरत्वं यत्सौकुमार्यमिदं यथा ॥ १४ ॥

श्लेष इति । यत्र पदानि परस्परं स्यूतानीव स्युः समस्तानीवेत्यर्थः । स श्लेषो भवति । समासबहुलत्वं ओजो गुणो ज्ञेयं तत् ओजो गद्येषु अतिसुन्दरमतिशोभावहं भवति ॥ ११ ॥

अथ श्लेषोदाहरणमाह । मुदेति । तेपि पाषाणमया अपि कुलशिखरिणः कुलपर्वताः चमत्कारेणाश्चर्येण उद्रेकमाधिक्यं उल्लासं दधिरे । किं कृत्वा यस्य राज्ञ भुजबलं श्रुत्वा किंभूतं सहचरीभिः कामिनीभिः सह वचनैर्मुदा हर्षेण उद्गीतं पुनः किंभूतं लीलोत्पाटितपृथिवीभारं । खिखरिणः किंभूताः पुलकिताः रोमाञ्चिताः।दरं ईषत् उद्गच्छन्तो निःसरन्तो ये दर्भाङ्कुरास्तेषां समूहस्तस्य कपटात् ॥ १२ ॥

अथ च गद्यतः ओजोगुणं दर्शयति यथा । समरेति । संग्रामाङ्गणस्फुरद्वैरिनरेन्द्राणां हस्तिसमूहं तस्य कुम्भस्थलावल्म्बिसरससिन्दूरपूरपरिचयेनेव सम्पर्केणेव आरक्तीभूतहस्तो देवे जयतीति ॥ १३ ॥

सरसार्थेति । यदर्थस्य पदानां च सरसत्वं मधुरत्वं भवति

फणिमणिकिरणालीस्यूतचञ्चन्निचो
कुचकलशनिधानस्येव रक्षाधिकारी
उरसि विशदहारस्फारतामुज्जिहानः
किमिति करसरोजे कुण्डलीकुण्डलि
प्रतापदीपाञ्जनराजिरेव
देव त्वदीयः करवाल एषः ॥
नो चेदनेन द्विषतां मुखानि
श्यामायमानानि कथं कृतानि ॥

तद्धर्मैर्माधुर्ययुक्तं । यत् अनिष्ठुराक्षरत्वं कोमला
त्सुकुमारत्वं कथितम् ॥ १४ ॥

अथ माधुर्योदाहरणमाह । फणिमणीति ।
श्रेण्या स्यूतः प्रोतो लक्षणया व्याप्तश्चञ्चत्प्र
कञ्चुको येन स तथा यस्य उरासि हृदये विशद
र्मलहारवत् विस्तीर्णतामुज्जिहानः प्राप्नुवन् भवति
शनिधानस्य रक्षाधिकारी स्यात् । तत हृदये यु
लेय किमिति इति संदेहः अन्योपि फणीनिध
भवति देव्या हस्ते कुण्डली सर्पः किमिति के
जाने देव्या कुचनिधानस्य रक्षार्थं नियुक्त इव अ
नां च माधुर्यं अर्थे तावत् शृङ्गारादयो रसा भव
नुभूयमानध्वनितं विपञ्चीशब्देनेव सरसत्वं बोद्ध

सौकुमार्योदाहरणमाह । प्रतापेति । हे दे
खड्गः प्रतापदीपस्य अञ्जनरेखा एव चेद्यदि एवं
अनेन खड्गेन वैरिणां मुखानि श्याम इवाचरन्ती
मानानि कथं विहितानि ॥ १६ ॥

गुणैरमीभिः परितोनुविद्धं
मुक्तफलानामिव दाम रम्यम् ॥
देवी सरस्वत्यपि कण्ठपीठे
करोत्यलंकारतया कवित्वम् ॥ १७ ॥

इति श्रीवाग्भटालंकारे तृतीयः परिच्छेदः॥३॥

—००—

## चतुर्थपरिच्छेदः ।

दोषैर्मुक्तं गुणैर्युक्तमपि येनोज्झितं वचः ॥
स्त्रीरूपमिव नो भाति तं ब्रुवेऽलंक्रियोच्चयम् ॥ १ ॥
चित्रं वक्रोक्त्यनुप्रासो यमकं ध्वन्यलंक्रियाः ॥
अर्थालंकृतयो जातिरुपमा रूपकं तथा ॥ २ ॥

गुणैरिति । देवी सरस्वत्यपि अलङ्कारहेतोः कण्ठपीठे कण्ठेन उच्चरतीत्यर्थः । अमीभिः पूर्वोक्तगुणैः समाश्रयेण सहितं किमिव मुक्ताफलानां दामेव । तदपि गुणैः प्रोतं स्यात् अन्यापि नायिका अलङ्कारत्वेन मुक्ताफलानां दाम कण्ठे करोति ॥ १७ ॥

इति श्रीवाग्भटालङ्कारटीकायां तृतीयः परिच्छेदः ॥३॥

—००—

अथजात्यलङ्कारादीनुदाजिहीर्षुराह । दोषैरिति । अहं तमलङ्कारसमूहं कथयामि येन उज्झितं त्यक्तं वचनं न शोभते दोषैरनर्थकारिभिर्मुक्तमपि गुणैरौदार्यादिभिर्युक्तमपि किमिव स्त्रीरूपमिव यथा स्त्रीरूपं दोषैर्वर्णादिभिर्मुक्तं गुणैर्वर्णादिभिर्युक्तमपि कटककेयूराद्यलङ्कारैर्विना नो भाति । अलङ्कारा द्विधा शब्दालङ्कारा अर्थालङ्कारा श्चेति ॥ १ ॥

यथा । चित्रम् । वक्रोक्तिः एते चित्रादयश्चत्वारोपि ध्वन्यलङ्काराः शब्दालङ्काराः इतरे जात्यादयो ऽर्थालङ्काराः कथ्यन्ते ॥२॥

प्रतिवस्तूपमा भ्रान्तिमानापेक्षोथ संशयः ॥
दृष्टान्तव्यतिरेकौ चापह्नुतिस्तुल्ययोगिता ।
उत्प्रेक्षार्थान्तरन्यासः समासोक्तिर्विभावना
दीपकात्तिशयो हेतुः पर्यायोक्तिः समाहितम्
परिवृतिर्यथासंख्यं विषमः स सहोक्तिकः ।
विरोधोवसरः सारं संश्लेषश्च समुच्चयः ॥ ९
अप्रस्तुतः प्रसंधिः स्यादेकावल्यनुमापि च
परिसंख्यातथा प्रश्नोत्तरं संकर एव च ॥
यत्राङ्गसन्धिस्तद्रूपैरक्षरैर्वस्तुकल्पना ॥
सत्यां प्रसत्तौ चित्रं तत् तच्चित्रं चित्रकृच्च
जनस्य नयनस्थानध्वान एनश्छिनत्त्विनः
पुनःपुनर्जिनः पीनज्ञानध्यानधनः समः ॥

प्रति०॥३॥ उत्प्रेक्षा०॥४॥ परिवृत्ति० ॥ ९ ॥ अ
पञ्चभिः श्लोकैः यथाक्रममलङ्काराणां नामानि ज्ञातव्या

यत्रेति । यत्रालङ्कारेऽक्षरैः कृत्वा वस्तुनः कमलद
रचनाः क्रियन्ते । अङ्गैरवयवैः सन्धिभिः सन्धैश्च तद्रू
पैरिति । अथ वा वस्तुनोङ्गानां ये सन्धयस्तेषु तद्रूपा
न्यक्षराणि कार्याणि तच्चित्रनामालङ्कारः स्यात् । क सा
अर्थप्रसन्नतायां सुललितत्वे च पुनस्तदपि चित्रं स्यात्
र्यकृत् ॥ ७ ॥

एकस्वरादिक्रमेणोदाहरणान्याह पूर्वं चित्रस्योद
था । जनस्येति । स जिनो ऽस्माकं पुनः पुनः वारं
पापं छिनत्तु । इनः स्वामी । जनस्य नयनस्थाने ध्वान
यस्य स तथा एतावता परमेश्वरस्य वचनेनैव जनः

इदं षोडशदलकमलबन्ध चित्रम् ।




( षोडशदलकमलं गोमूत्रिका च चित्रमिदम् ॥ )

गणवरगणवरकरतरचरण
परमपदशरणगजनपथकथक ॥
अमदनगतमदगजकरयमल
शममयजयभयधनवनदहन ॥ ९ ॥

तावता ज्ञानं पीनं लोकालोकप्रकाशकत्वात् ध्यानं च पीनं निश्चलत्वात् । इदं षोडशदलकमलाकारचित्रम ॥ गोमूत्रिकाइदमेव गतिचित्रं च ॥ ८ ॥

उभयोः स्थापनाय यथा एकं स्वरचित्रमाह । गणवरेति । हे शममय शमेन निवृत्तः शममयः तस्य सम्बोधनं हे जिन त्वं

| | |
|---|---|
| नं | नं |
| वि | म |
| न | नं |
| ठि | ध |
| नं | न |
| ए | ख्या |
| न | न |
| ख्वा | ज्ञा |
| न | न |
| स्था | पी |
| न | नं |
| म | ठि |
| न | नं |
| स्य | पु |
| न | नं |

गोमूत्रिकाबन्धःएकस्वरसंज्ञं चक्रमिदं

मूलस्थितिमधः कुर्वन्
पात्रैर्जुष्टो गताक्षरैः ॥
विटः सेव्यः कुलीनस्य
तिष्ठतः पथिकस्य सः ॥ १० ॥

सर्वोत्कर्षेण वर्तस्व । गणाःगच्छा(?)नरा म
स्तेषां गणः समूहस्तस्य वरं वाञ्छित कुरुत
वरकरौ प्रकृष्टौ करतरौ उत्कृष्टकर्तारौ
यस्य स तथा तस्य सम्बोधनम् । परमप
क्षपदं तस्य शरणगा जनास्तेषां मार्गस्य
थक उपदेशक । अमदन हे कन्दर्परहित
गताहङ्कार गजस्येव करयमलं बाहुयुगलं
स तथा तस्य सम्बोधनं । शमल इति प
गजस्य हस्तिनः करः शुण्डादण्डः तद्वत्
लः श्यामवर्णः भयमेव घनं निबिडं वनं
श्वानरावतार । एकस्वरचित्रमिदम् ॥ ९

मूलस्थितिमिति । स एवंविधो विटः
कुलीनस्य सेव्यो भवति न कस्यापि वि
पथि मार्गे सदाचारे तिष्ठतः कथंभूतो
मूलस्थितिं मूलकुलाचारं अधः कुर्वन् ग
येभ्यस्ते गताक्षरा मूर्खास्तैर्जुष्टः सेवितः
विटपदात् अवमानेन इकारेण अर्थात् भू
ष्ठति इति स एवंविधो यदा पथिकस

( विटपदादिकारमात्रच्युतकं वट इति ॥ )

धर्माधर्मविदः साधुपक्षपातसमुद्यताः ॥
गुरूणां वचने निष्ठा नरके यान्ति दुःखिताम्॥११॥

वचनपदाद्बिन्दुच्युतकं वचनमिति ॥

ककाकुकङ्ककेकांककेकिकोकैकः ककः ॥
कुकुकौकः काककाककक्काकुकुककां कुकुः ॥१२॥

( एक व्यञ्जन चित्रमिदम् । )

मूलानां जटानां स्थितिं अधः कुर्वन् । गतागतं अक्षरं आवा इत्यक्षरं येभ्यस्तैः पुत्रैरित्यर्थः । किंभूतस्य पथिकस्य कौ पृथिव्यां लीनस्य तिष्ठतः प्रयाणं दत्त्वा स्थितस्य विटपदादिकारमात्रच्युतकं वा इति इकारमात्रच्युतकं स्वरचित्रमिदम् । च्यवमानस्वरत्वे नाश्चर्यं भवति ॥ १० ॥

धर्माधर्मेति । गुरूणां वञ्चने तत्पराः नरके गतौ दुःखतां गच्छन्ति धर्ममधर्ममिव जानन्ति साधूनां पक्षपातने सोद्यमाः बिन्दुच्युतके वञ्चनपदात् वचनमेव भवति । हे नरगुरूणां पित्रादीनां वचने निर्देशे रताः किंपुरुषाः दुःखतां यान्ति अपि तु न कोपि । तेषु गुणसम्पत्तिमाह । मार्गामार्गौ विदन्तीति साधूनां पक्षपाते साहाय्ये सावधानाः उपकारिण इत्यर्थः । वञ्चनपदाद्बिन्दुच्युतकं वचनमिति ॥ ११ ॥

एकव्यञ्जनचित्रमाह । ककेति । श्रीनेमिनिर्वाणमहाकाव्योराजीमतीपरित्यागाधिकारेसमुद्रवर्णने ककाकु इत्ययंश्लोको वर्तते । ककोवारिधिः केनजलेन उपलक्षितः को वातो यत्र यद्वा-केन वायुन प्रेरितं कं जलं यत्रेति क कः किंभूताः कं सुखकारी काकुर्ध्वनिविशेषो येषां तं ककाकवः । केन कामेन जलेन का-

कुर्वन् दिवाकराश्लेषं दधच्चरणडम्बरम् ॥
देव यौष्माकसेनायाः करेणुः प्रसरत्यसौ ॥ १३ ॥
करेणुपदात् ककारमात्राक्षरच्युतकम् ॥
प्रस्तुतादपरं वाच्यमुपादायोत्तरप्रदः ॥
भङ्गश्लेषमुखेनाह यत्र वक्रोक्तिरेव सा ॥ १४ ॥

कवो ध्वनिविशेषा येषां ते तथेति वा । काकवश्चते कङ्काश्च जलपक्षिणः केका मयुरध्वनिरङ्कश्चिन्हं येषां ते केकाङ्काश्च ते केकिनो मयूराश्च कोकाश्चक्रवाका एतेषां एकमद्वितीयम् । कुः स्थानं भूमिः न कवः कुत्सिता अ कवः शोभनाः कौकसो जलवासिनश्च ते काकाश्च जलवायसाः काका एव काककाः । स्वार्थे क प्रत्ययः । तेषां अका मातारो यस्मिन् पालनत्वात् । तथा ऋचो वेदवाचस्तासां काकवो वक्रोक्तयस्ताः । कुकि वकि आदाने । कुकिभिर्जल्पति इति कक्काकुकः स चासौ को ब्रह्मा च स एव अङ्के उत्सङ्गे यस्य स विष्णुस्तस्य कुःस्थानं यः समुद्रशायित्वादस्य ॥ १२ ॥

कुर्वन्निति । हे देव यौष्माकस्य सैन्यस्य असौ करेणुः हस्ती प्रसरति किं कुर्वन् दिवाकाशेन सह कराश्लेषं शुण्डाश्लेषं सृजन् पुनश्चरणानां आडम्बरं दधत् स्थूलत्वात् । अत्र च ककारच्युतके रेणुः प्रसरति । दिवाकरस्य सूर्यस्य श्लेषं कुर्वन् पुनः चरणाडम्बरं दधत् । एवं व्यञ्जनच्युतकम् ॥ १३ ॥

वक्रोक्तेः स्वरूपमाह । प्रस्तुतेति । यत्र उत्तरदाता प्रस्तुतात् प्रस्तावात् यत्रान्यद्वाच्यं कृत्वा भङ्गेन शब्द खण्डेन श्लेषपदेन च उभयतार्थवाचिना शब्देनेव ब्रूते सा वक्रोक्तिः कथ्यते । एवशब्दात् स श्लेषालङ्कारो नेत्युक्तम् ।

नाथ मयूरो नृत्यति तुरगाननवक्षसः कुतो नृत्यम् ॥
ननु कथयामि कलापि नामिहसुखलापी प्रिये कोस्ति ॥१५॥
भर्तुः पार्वति नाम कीर्तय नचेत्त्वां ताडयिष्याम्यहं
क्रीडाब्जेन शिवेति सत्यमनघं किं ते शृगालः पतिः ॥
नो स्थाणुः किमु कीलको नहि पशुस्वामी नु गोप्ता गवां
दोलाखेलनकर्मणीति विजयागौर्योर्गिरः पान्तु वः ॥ १६ ॥

अथ भङ्गोदाहरणमाह । नाथेति । काचिद्वरवर्णिनी नृत्यन्तं केकिनं दृष्ट्वा प्राह । हे नाथ हे प्राणवल्लभ मयूरो नृत्यति ॥ सप्रियो भङ्गेनाह । हे प्रिये । 'स्यात्किनरः किंपुरुषस्तुरङ्गवदनोमयु'रिति वचनान्मयुः किंनरः तस्य उरो हृदयम् । तस्य नृत्यमेव कुतः । प्रियाप्राह । नन्वहं कलापिनं कथयामि । कलापो मयूरपिच्छभारे विद्यते यस्य स तथा तम् । प्रियः प्राह । प्रिये अत्र स्थाने कं सुखं लपति जल्पति इति कलापी कोस्ति । इति पदभङ्गेन उत्तरदानम् ॥ १५ ॥

अथ श्लेषोदाहरणं यथा । भर्तुरिति । विजयागौर्योः तन्नायकसखीगौर्योः आन्दोलनक्रीडावसरे गिरो वाण्यो वो युष्मान् पान्तु रक्षन्त्विति । इति किम् । विजयाह । हे पार्वति भर्तुः प्रियस्य नाम कीर्तय कथय चेन्न कीर्तयसि तदा निजक्रीडाकमलेन त्वां ताडयिष्यामि । पार्वत्याह । शिवः ईश्वरः । सख्याह । हे गौरि प्रकटमिदं शिवः शृगाल उच्यते स किं ते भर्ता । गौर्याह । तत्र किन्तु स्थाणुः । ततो विजया प्राह । स्थाणुस्तु कीलकः स किं ते भर्ता । पुनर्गौर्याह । न हि किन्तु पशुस्वामी पशुपतिः पुनः सख्याह । नु इति वितर्के । गवां गोप्ता किं ते भर्ता इति । अत्र पूर्वोक्तशब्दस्यैव अर्थान्तराश्रयणात् श्लेषवक्रोक्तिरियम् ॥ १६ ॥

तुल्यश्रुत्यक्षरावृत्तिरनुप्रासस्फुरद्गुणः ॥
अतत्पदः स्याच्छेकानां लाटानां तत्पदश्च सः १७
अलं कनकशृङ्गारकरप्रसरहेलया ॥
चन्द्रचण्डीशनिर्माल्यमसि न स्पर्शमर्हसि ॥ १८ ॥
रणे रणविदो हत्वा दानवान्दानवद्विषा ॥
नीतिनिष्ठेन भूपालभूरियं भूस्त्वया कृता ॥ १९ ॥

अथानुप्रासलक्षणमाह । तुल्येति । तुल्या श्रुतिः श्रवणमाकर्णनं येषां तानि तथा तुल्यश्रुतानि तानि अक्षराणि च वर्णाः तुल्यश्रुत्यक्षराणि तेषामावृत्तिः पुनः पुनरागम उच्चारणं सोनुप्रास इत्युच्यते । किंभूतो ऽस्फुरन्तो दीप्यन्तो गुणा औदार्यादयो यस्मात्स स्फुरद्गणः गुणो हि अनुप्रासे न दीप्यते स चानुप्रासो द्विधा छेकानुप्रासो लाटानुप्रासश्चेति । छेको विदग्धो लाटलापृ(?)लाटदेशीयाः तत्र छेकानुप्रासस्तत्पदस्यात् तान्येव पूर्वोक्तानि पदानि यत्र स तथा अतत्पद इति । न तत्पदो ऽतत्पदः अभिन्नपद इत्यर्थः । लाटानुप्रासश्च तत्पदः ॥ १७ ॥

अथ छेकानुप्रासलक्षणमाह । अलमिति । काचिद्विरहिणी-चन्द्रमसं प्रत्याह । हे चन्द्र करप्रसरहेलयाकिरणविसरणलीलया अलं पूर्यताम् । कलङ्क एव शृङ्गारो यस्य स तथा । तत्सम्बुद्धि हे कलङ्कशृङ्गार चण्डीशनिर्माल्यं वर्तसे अतः स्पर्शं नार्हसि स्प्रष्टुं योग्यो नार्हसि । अन्यदपि । ईश्वरनिर्माल्यं न स्पृश्यते अन्यस्य कलङ्को दूषणम् । हे चन्द्र तत्रात्यन्तनिकृष्टस्य एव दूषणम् ॥ १८ ॥

अथ लाटानुप्रासोदाहरणम् । रण इति । कश्चित् श्रीकृष्णस्तुतिमाह । हे भूपाल इयं भूः पृथ्वी भूस्त्वया धनकुप्यादीनां

त्वं प्रिया चेच्चकोराक्षि स्वर्गलोकसुखेन किम् ॥
त्वं प्रिया यदि न स्या मे स्वर्गलोकसुखेन किम् ॥२०॥
एकत्रपात्रे स कलत्रवक्त्रं नेत्रामृतं बिम्बितमीक्षमाणः ॥
पश्चात्पपौ सीधुरसं पुरस्तान्ममाद कश्चिद्यदुभूमिपालः २१
स्यात्पादपदवर्णानामावृत्तिः संयुतायुता ॥
यमकं भिन्नवाच्यानामादिमध्यान्तगोचरम् ॥ २२ ॥

भूः प्रसवः उत्पत्तिस्थानं कृत्वा । किं कृता । संग्रामकोविदान्दानवान्दैत्यान् कंसादीन् हत्वा विनाश्य । किंभूतेन त्वया दानद्विषा दैत्यवैरिणा ॥ १९ ॥

अथ पादेन लाटानुप्रासोदाहरणमाह । त्वंप्रिये ति । हे चकोराक्षि चकोरवदक्षिणी यस्याः साः । तस्याः सम्बोधनं त्वं प्रिया यदि स्याः तर्हि स्वर्गलोकसुखेन किं करवाणि चेत्त्वं मम प्रिया न स्यास्तदापि तेन किम् ॥ २० ॥

एतेषु पूर्वोक्तेषु सर्वथा तुल्यानामेव वर्णानां आवृत्तिरुक्ता संप्रति किंचित् भेदेपि वर्णानां तुल्यश्रुतित्वात् अनुप्रासः स्यादिति दर्शयति तथा एकत्रेति । कश्चित् यदुभूमिपालो यादवराजः सीधुरसं मद्यरसं पश्चात्पिबति स्म पुरस्तात्पूर्वमेव प्रमादं उन्मादं प्राप्तवान् तत्र हेतुगर्भितं विशेषणमाह । किंविशिष्टः एकस्मिन् भाजने स्वकलत्रस्य वदनं प्रतिबिम्बितं नेत्रस्यामृतप्रायं हर्षकारिर्ह्वीक्ष्यमाणः पश्यन् एतावता कलत्रवक्त्रदर्शनादेव ममाद उन्मादं गतः। मद्यं पश्चात्पपौ यश्च स्फुरद्गुणो न भवति स नानुप्रासः यथा एकत्र पात्रे इति अत्र बहुतरवर्णावृत्तौ सौकुमार्यबाधः एवमन्येषामपि गुणानां बाधोनुप्रासासक्तेन कविना रक्षणीयम् २१

अथ यमकलक्षणभेदानाह । स्यादिति । पादपदवर्णानामावृत्तिः पुनर्भणनं पुनः पुनरनुशीलनं द्विरुक्तत्वं यमकं स्यात् वृत्त-

दयां चक्रे दयांचक्रे
सतां तस्मात् भवान्वित्तं ॥ २३ ॥
यशस्ते समुद्रान् सदारोरगारेः ॥
सदारोरगारेः समानाङ्गकान्तेः ॥ २४ ॥

स्य चतुर्थांशः पादः कथ्यते विभक्त्यन्तं पदं वर्णाः अक्षराणि एतेषां त्रयाणामपि आवृत्तिर्द्विधा भवति एकासंयुता मिलिता संलग्ना अपरा असंयुता असंमिलिता एतावता षड् भेदा यमकस्य षड्विधमपि यमकं त्रिप्रकारम् । एकं आदिगोचरं पादस्य प्रथमाक्षरविषयं द्वितीयं मध्यगोचरं पादस्यान्तरालवर्तिवर्णविषयं तृतीयमन्तगोचरं पादस्य प्रान्तवर्णविषयं एतावता यमकस्य स्फुटा अष्टादशभेदा भवन्ति वर्णादीनांऽसंयुता संयुता संयुतत्वादन्येपि बहवो भेदा भवन्ति किंविशिष्टानां पादपदवर्णानां भिन्नः पृथग्वाच्यः अर्थो येषान्ते तथा एतावता लाटानुप्रासस्य यमकं निरस्तं । तत्र अर्थस्यैक्यात् अत उदाहरणाधिक्यम् ॥ २२ ॥

अथ यमकोदाहरणानि दर्शयति यथा । दयेति । भवान् त्वं दयां चक्रे कृपां कृतवान् तस्मात्कारणात्सतां वित्तं द्रव्यं दयां चक्रे दत्तवान् । चतुरक्षरं छन्द इदं चूडानाम ॥ २३ ॥

मध्यपादयमकमाह । पराइति । हे राजेन्द्र ते यशः सत्प्रधानभूतं समुद्रान् आसमुद्रपारं गतमिति । किंभूतस्य ते उरगारेर्गरुडस्य तुल्या अङ्गकान्तिः शरीरदीप्तिर्यस्य स तथा तस्य सुवर्णवर्णस्येत्यर्थः । पुनः किं सदा निरन्तरं दारिद्रं गच्छतीति सदा रोगा एव विधा अरयो यस्य स तथा तस्येति । इदं षडक्षरं सोमराजीछन्दः ॥ २४ ॥

द्विषामुद्धतानां निहंसि त्वमिन्द्र ॥
मुदं भो धराणामुदम्भोधराणाम् ॥ २५ ॥
वेभाऽतिरामा परमारणस्य विभाति रामा परम रणस्य ॥
दैव तेऽजोर्जितराजमान सदैवतेजोर्जितराजमान ॥२६॥
सारं गवयसां निध्यराजिकाननमग्रतः ॥
सारङ्गवयसां निध्यदारु शिखरे गिरेः ॥ २७ ॥

अन्त्यपदयमकमाह । द्विषामिति हे राजेन्द्र प्रचण्डानाम् । रिणां मुदं हर्षं निहंसि । विनाशयसि क इव केषां इन्द्र इव राणां यथा इन्द्रः पर्वतानां उदम्भोधराणां उन्नतमेघानां च दं निहन्ति । इदमपि षडक्षरं छन्दः ॥ २५ ॥

आदिमध्यमगोचरं मध्यान्तगोचरं च यथा विभातीति । हे जेन्द्र तव रणस्य संग्रामस्य तेजः सदैव सर्वदा विभाति । किं- तं परमारणस्य वैरिमारणस्य । किंभूता रणस्य विभा अतिरामा ातिक्रान्तो रामो लक्ष्मणाग्रजो यया सा तथा । पुनः किंभूतं परमा त्कृष्टा रामा रम्या । हे अजोर्जितराजमान विष्णुबलशोभमान ह दैवेन भाग्येन वर्तते यत्तत् सदैवं एवंविधं तेजस्तेन अर्जितं जसु मानः पूजा वा येन स तथा तत्सम्बोधनम् ॥ २६ ॥

अथासंयुतावृत्तौ सारमिति । आदिमध्यगोचरं यथा अत्र गि- नारवर्णनं गिरेः शिखरे शृङ्गे काननं वनं अग्रतः वर्तते इति- षः । किंभूतं काननं सारं प्रधानं गवयानां आरण्यशण्डानां सां ध्येन नैकद्व्येन राजत इत्येवं शीलं । सारङ्गवयसां मृगपक्षिणां ानमिति शेषः । निधिभिः अदारुणं । यद्वा सारङ्गवयसां विभूतं स्थानकभूतमुदारं च ॥ २७ ॥

आसन्नदेवा न रराज राजिरुच्चैस्तटानामियमत्र नाद्रौ ॥
क्रीडाकृतो यत्र दिगन्तनागा आसन्नदेवानररोजराजिः २८

अमरनगरस्मेराक्षीणां प्रपञ्चयति स्फुर-
त्सुरतरुचये कुर्वाणानां बलक्षम रंहसम् ॥
इह सह सुरैरायान्तीनां नरेश नगेन्वहं
सुरतरुचये कुर्वाणानां बलक्षमरं हसम् ॥ २९ ॥

रम्भारामा कुरबक कमलारम्भा रामा कुरबककमला ॥
रम्भारामाऽकुरबककमलारम्भारामाऽकुरबककमला ॥३०॥

आद्यान्तयमकं यथा। आसन्नेति। अत्रादौ पर्वते इयं तटानां राजिः नन रराज किन्तु रराजैव। किंविशिष्टा। आसन्नदेवा अत्युच्चैस्तरत्वात्। आसन्ना अदूरा देवा यस्यां सा तथा यत्र पर्वते दिग्न्तनागा दिग्गजा नदे जलाश्रये क्रीडाकृतः आसन् वर्तन्ते स्म। पर्वते किंविशिष्टे वानरेन्द्रशोभमाने ॥ २८ ॥

मध्यान्तगोचरं यथा। अमरेति। हे नरेश हे बलक्षम वीर्यसमर्थ इह अस्मिन्गिरिनारपर्वते बाणानां बाणवृक्षाणां कुः भूमिः स्वर्गस्त्रीणां देवीनां रंहसं वेगं प्रपञ्चयति विस्तारयति मनोहरत्वात्। कीदृशे स्फुरन्तः शोभमानाः सुरतरूणां कल्पवृक्षाणां चयाः समूहाः यत्र स तथा। कीदृशीनां देवीनां सुरैर्देवैः सह सुरतरुचये सम्भोगाभिलाषायान्वहं सर्वदा आयान्तीनां गच्छन्तीनां बाणवृक्षभूमिकामनोरमत्वात् मार्गे वेगमुत्पादयति। पुनः कीदृशीनां अरमत्यर्थं बलक्षं धवलं हासं हास्यं कुर्वाणानां विदधतीनां। एतावतास्मिन्पर्वते सुरैः सह सम्भोगं कर्तुमागच्छन्ति देव्य इति शेषः ॥ २९ ॥

श्लोकावसानावृत्तिर्यथा। रम्भेति। हे अवक रक्षक श्रीनेमे एवंविधा कुर्भूमिः वर्तते। किंभूता रम्भारामा रम्भानां कद

री ततमेष धत्ते सेवालसेवालसहंसमम्भः ॥
ं बालमलं दधानं मन्दारमन्दारववायुरद्रिः ३१
मिर्विशालनयनो नयनोदितश्री-
भ्रान्तबुद्धिविभवो विभवोथ भूयः ॥
ग्मस्तदेति नगरान्नगराजि तत्र
तेन चारु जगदे जगदेकनाथः ॥ ३२ ॥

उपवनानि यस्यां सा तथा। किंभूता कुः कमलार-
मारम्भ उत्पत्तिस्थानं यस्यां सा तथा। रामा रम-
ः वृक्षविशेषैः कमला शोभा यस्यां सा तथा। रम्भा
एव रामा नार्यो यस्यां सा तथा। अकुः अकुत्सिता।
अबकं बकपक्षिरहितं कं पानीयं मलतो धारयती-
ारणमरमत्यर्थं भैर्नक्षत्रैरा ईषद्रामा कर्बुरा इत्यर्थः।
ः शब्दो येषां ते कुरबकाः न कुरबका अकुरब-
हरिणा यस्यां सा तथा। एवमन्यदपि यमकं द्र-
० ॥

प्रकारेण पदयभकोदाहरणानि। अत्र संयुतावृ-
कं यथा। हारीतहारी एषोद्रिर्गिरिनारपर्वतः अम्भः
किंभूतोद्रिः हारीतैः पक्षिविशेषैः हारी मनोहारी।
तं विस्तीर्णं शैवालसेवार्थमलसा मन्थरा हंसा यत्र
ले पङ्के जातं जम्बालजं कमलमलमत्यर्थं दधानं
बालमप्रौढं नवीनम्। किंभूतोद्रिः मन्दारमन्दार-
रवृक्षेण मन्दारवः अल्पशब्दो वायुर्यस्मिन्स
॥

यथा। नेमिरिति। अथानन्दे भूयो वारंवारं
राथिना चारु मनोहरं यथा भवति तच्चैव जग-

यदुपान्तिकेषु सरलाः सरला
यदनुच्चलन्ति हरिणा हरिणाः ॥
तदिदं विभाति कमलं कमलं
मुदमेत्य यत्र परमाप रमा ॥ ३३ ॥
कान्तारभूमौ पिककामिनीनां
कां तारवाचं क्षमतेस्मस्य सोढुम् ॥
कान्ता रतेशेऽध्वनि वर्तमाने
कान्तारविन्दस्य मधोः प्रवेशे ॥ ३४ ॥

दे बभाषे। किंभूतो नेमिः विशालनयनः विस्तीर्णनेत्रः। पुनः किंभूतः नयेन न्यायमार्गेण नोदिता प्रेरिता श्रीर्यस्मिन् स तथा। अपरं किंभूतः अभ्रान्तः सत्यो बुद्धिविभवो यस्य स तथा। पुनः किंभूतः विगतः नष्टः भवः संसारो यस्मात्स विभवः। नगरात् द्वारवत्यास्तत्र नगराजि गिरिनारपर्वते प्राप्तः। जगत एकोऽद्वितीयो नाथः ॥ ३२ ॥

अन्तयमकं यथा। यदुपान्तिकेष्विति। तदिदं कं पानीयं अलमत्यर्थं विभाति। यदुपान्तिकेषु यस्य जलस्य समीपेषु सरलाः अवक्राः सरलाः देवदारवो वर्तन्ते। यज्जलमनुलक्षीकृत्य हरिणा वायुना सह हरिणाः मृगा उच्चलन्ति उत् प्राबल्येन भ्रमन्ति। यत्र पानीये रमा लक्ष्मीः एत्य परमुत्कृष्टं कमलं पदं आप लेभे। यत्र कमले एत्य लक्ष्मीः परं मुदं प्राप्तवती ॥ ३३ ॥

असंयुतावृत्तौ यथा। कान्तारेति। कान्ता स्त्री रतेशे भर्तरि अध्वनि मार्गे वर्तमाने सति मधोर्वसन्तस्य प्रवेशे प्रारम्भे कान्तारभूमिकायां पिककामिनीनां कोकिलानां तारं वाचं मनोज्ञवाणीं सोढुं का (कां) क्षमते स्म। अपि तु न का(म)पि। किंभूतस्य मधोः कान्तानि मनोज्ञानि अरविन्दानि कमलानि यस्मिन्स तथा ॥ ३४ ॥

चकार साहसं युद्धे धृतोल्लासा हसं च या ॥
दैन्यं वा साहसं प्राप्ता द्विषां सोत्साह संततिः ॥२५॥

गिरां श्रूयते कोकिला कोविदाऽरं
यतस्तद्वनं विस्फुरत्कोविदारम् ॥
मुनीनां वसत्यत्र लोको विदारं
नच (?) व्याधचक्रं कृतौको विदारम् ॥२६॥

सिंधुरोचितलताग्रसल्लकी सिंधुरोचितमुपेत्य किन्नरैः ॥
कंदराजितमदस्तटं गिरेः कंदराजितगृहश्रि गीयते २७

मध्यमयमकं यथा । चकारेति । हे सोत्साह सोद्यम सा द्विषां संततिस्त्वां संप्राप्ता सती दैन्यमाह । या युद्धसाहसं चकार । च पुनः धृतोल्लासा सती हसं हास्यं चकार ॥ २५ ॥

अन्त्ययमकं यथा । गिरामिति । कोकिला श्रूयते । किंभूता गिरांविषये कोविदा पण्डिता अरमत्यर्थं यतः यस्मात् तद्वनं विस्फुरत्कोविदारं विकसत्कर्णिकारवृक्षं । अत्र वने मुनीनां लोको विदारं निःकलत्रं यथा स्यात्तथा वसति । चेति पुनः अत्र व्याधचक्रं आखेटकसमूहः कृतौकः कृतनिवासं वर्तते । किंभूतं वीन् पक्षिणस्तान् दारयतीति विदारम् ॥ २६ ॥

अथ पादद्वयेपि आदिमध्यान्तयमकान्युदाह्रीयन्त । तत्र पादद्वयादियमकं यथा । सिन्ध्विति । अदो गिरेस्तटं उपेत्य आगत्य किन्नरैर्गीयते । किंभूतं तटम् । सिन्धुरोचितलताग्रसल्लकीसिन्धुरोचितम् । सिन्धुराणां गजानां उचिता योग्या लतास्ता अग्राः प्रधानाः सल्लक्यः गजभक्ष्यवृक्षविशेषा यस्यां सा एवंविधा सिंधुर्नन्दी तया रोचितं शोभितं तव हस्तियोग्या लताग्राः सल्लक्यश्च ताभिरुपलक्षिताः सिन्धवो नद्यस्ताभिः शोभि शोभितं । पुनः किंभूतं कन्दराजितं कन्दैः राजितं कन्दराभिर्गुहाभिर्जिता गृहश्रीर्येन तत्तथा २७

वसन्सरोगोऽत्र जनो न कश्चि-
त्परं सरोगो यदि राजहंसः ॥
गीतं कलं को न करोति सिद्धः
शैले कलङ्कोज्झितकाननेऽस्मिन् ॥ ३८ ॥

जहुर्वसन्ते सरसी न वारणाः
बभुः पिकानां मधुरा नवा रणाः ॥
रसं च का मोहनकोविदार कं
विलोकयन्ती बकुलान् विदारकम् ॥ ३९ ॥

वरणाः प्रसूनविकरावरणा
मलिनां वहन्ति पटलीं मलिनाम् ॥
तरवः सदात्र शिखिजातरवः
सरसश्च भाति निकटे सरसः ॥ ४० ॥

पादद्वयमध्ययमकं यथा । वसन्निति शैले कः सिद्धो देवयोनिविशेषः कलं मधुरं गीतं न करोति किं तु सर्वोपि । किंभूते कलङ्कौ विषवृक्षवर्जिते अत्र शैले वसन् सरोगः स सव्याधिः कश्चिद्यदि न वर्तते । तथा परं केवलं सरोगो राजहंसो वर्तते । सरसि गच्छतीति सरोगः ॥ ३८ ॥

पादद्वयान्तयमकं यथा । जहुरिति । वसन्ते ऋतौ वारणा गजाः सरसी सरः न जहुर्न तत्यजुः। कोकिलानां मधुराः कर्णसुखदाः नवाः नवीनाः रणाः शब्दा बभुः । का स्त्रीमोहनकोविदा सुरतपण्डिता गतभर्तृका का चिन्नायिका बकुलान् विलोकयन्ती सती कं रसं न आर अपि तु सर्वं रसं प्राप । कथमित्यर्थान्तरे । किमपि रसं गता विदारकं निःपुत्रं यथा भवति तथा निःपुत्रायाः सम्भोगक्षमत्वात् ॥ ३९ ॥

पादेषु आद्यन्तयमकं यथा । वरणा इति । वरणा वृक्षविशे-

यथा यथा द्विजिह्वस्य विभवः स्यान्महत्तमः ॥
तथा तथास्य जायेत स्पर्द्धयेव महत्तमः ॥ ४१ ॥

दास्यति दास्यति 'कोपा'
दास्यति सति कर्करान् 'शापम्' ॥
'भवति' भवति ह्यनर्थो
भवति मितस्तेन 'बटुक त्वम्' ॥ ४२ ॥

कुलं तिमिभयादेव करेऽणूनां न दीव्यति ॥
नदीव्यतिकरेणूनां प्राणिनां गणनापि का ॥ ४३॥

षाः वर्तन्ते किंभूताः प्रसूनविकरावरणाः पुष्पसमूह एवावरणमाच्छादनं येषां ते तथा तरवोऽलिनां भ्रमराणां पटलीं श्रेणीं वहन्ति किंभूतां मलिनां श्यामां अत्र गिरिनारपर्वते सरसः सरोवरस्य सरसः समीपे शिखिजातरवो मयूरकृतशब्दः शोभते। किंभूतः निकटे कोमलः ॥ ४० ॥

पादद्वयान्तयमकं यथा । यथायथेति । यथायथा द्विजिह्वस्य दुर्जनस्य विभवो द्रव्यं महत्तमः उत्कृष्टतमः स्यात्तथा तथास्य विभवस्य स्पर्धयेव संहर्षेणेव महत्तमो महाऽज्ञानं जायेत कोपो वा उत्पद्येत एवमन्यदप्युदाहरणम् ॥ ४१ ॥

संयुतासंयुतावृत्तिर्यथा । दास्यतीति । दासी अतिकोपात् भवति त्वयि शापं दास्यति तथानर्थो भवति हीति यस्मादर्थे तेन कारणेनाह बटुक त्वं स्तिमितो भव निश्चलो भव। चापल्यं मा कृथा इत्यर्थः । किंभूते त्वयि आसमन्तात् कर्करान् अस्यति क्षिपति सति ॥ ४२ ॥

मध्यान्तयमकं यथा । कुलमिति । अत्रास्मिन् नदीव्यातिकरे नदीसङ्गमे नद्याः आस्थाने करेणूनां हस्तिनां कुलं तिमिभयात् मत्स्यविशेषभयात् न दीव्यति न क्रीडाति । अणूनां

गाङ्गाम्बुधवलाङ्गाभो मुमुक्षुध्यानगोचरः ॥
पापार्तिहरणायास्तु स सज्ज्ञानो जिनः सताम्॥४४॥
जगदात्मकीर्तिशुभ्रं जनयन्नुद्दामधामदोःपरिघः ॥
जयति प्रतापपूषा जयसिंहक्ष्माभृदधिनाथः ॥ ४५ ॥
मामाकारयते रामा सा सा मुदितमानसा ॥
याया मदारुणच्छाया नानाहेलामयानना ॥ ४६ ॥

लघीयसां प्राणिनामपि का गणना किं तु न कापि ॥ ४३ ॥

इदानीं वर्णवृत्तिरुदाह्रीयते । गङ्गेति । गङ्गाया इदं गाङ्गं तच्चाम्बु पानीयं तद्वत् धवला अङ्गस्य आभा कान्ति र्यस्य स तथा । एतावता श्रीचन्द्रप्रभो जिनः तथा अष्टदलकमले पञ्चपरमेष्ठिध्याने अर्हन्तो धवला ध्यायन्ते । अत एव उक्तमुमुक्षूणां साधूनां ध्यानगोचरः ध्यानविषयः सज्ज्ञानः सत् समीचीनं ज्ञानं यस्य तस्माद्वाऽन्येषामिति । एवंविधः स जिनः सतां सत्पुरुषाणां पापार्तिहरणाय अस्तु । एवं संयुतासंयुतवृत्तौ पूर्ववदन्येपि भेदा ज्ञेयाः ॥ ४४ ॥

संयुतायुतवर्णा वृत्तिर्यथा । जगदिति । जयसिंहक्ष्माभृदधिनाथो राजाधिराजो जयति सर्वोत्कर्षेण वर्तते । किं कुर्वन् । जगद्विश्वं आत्मीययशसा धवलं जनयन् उद्दामं उत्कटं धाम तेजो यस्य स तथा । ईदृशो दोरेव भुज एव परिघोऽर्गला यस्य स तथा । प्रतापेन पूषेव सूर्यसन्निभः ॥ ४५ ॥

संयुतासंयुतवृत्तिर्यथा । मामिति । सा सा रामा स्त्री मुदितमानसा सती मां आकारयते आह्वयति । या या मदेन मद्यपानेन रक्तीभूतदेहच्छाया । अथ वाभिमानेनारुणच्छाया लोचनादिमुखरक्तीभूतत्वात् । नानाविधा अनेकधा अनेकप्रकारा हेला लीला तन्मयमाननं मुखं यस्याः सा तथा ॥ ४६ ॥

स्वभावोक्तिः पदार्थस्य सक्रियस्याक्रियस्य वा ॥
जातिर्विशेषतो रम्या हीने तत्रार्भकादिषु ॥ ४७ ॥

बर्हावली बहलकाञ्चिरुचो विचित्र-
भूर्जत्वचा रचितचारुदुकूललीलः ॥
गुञ्जाफलग्रथितहारलताः सहेलं
खेलन्ति खेलगतयोत्र वने शबर्यः ॥ ४८ ॥

आरत्तघोराणिभीसणवअणुक्केरा कुरंगच्छि ॥
उल्लसिअवीसभुअवणविणिवेसो दसमुहो एसो॥४९॥

इति यमकोद्देशमभिधाय इदानीमर्थालङ्काराणां क्रमेण लक्षणान्युदाहरति । कविस्तत्राद्यलङ्काराभिधित्सयामुं श्लोकमाह। स्वभावेति । सक्रियस्य चेतनस्य मनुष्यादेः क्रियासहितस्य यअथ वा आक्रियस्याचेतनस्य निश्चलस्य पर्वतादेः पदार्थस्य स्वरूपवर्णनं जातिनामालङ्कारः स्यात् । सा च हीने भिल्लकादौ त्रस्ते भीतेऽर्भकादिषु बालकादिषु वर्ण्यमाना विशेषतो रम्या भाति ॥ ४७ ॥

अथोदाहरणम् । बर्हेति । अत्र वने शबर्यो भिल्लनार्यः खेलन्ति बर्हावली मयूरपिच्छश्रेणी तद्वद्बहलया सान्द्रया काञ्च्या कटिमेखलया रोचन्ते शोभन्ते यास्तास्तथा विचित्रया पञ्चवर्णया भूर्जत्वचा विहितप्रधानवस्त्रलीलाः गुञ्जाफलैर्ग्रथितहारलताः सहेलं सलीलं यथा भवति तथा खेलगतयः सविलासगतयः शबरीणां हीनत्वात् हीने उदाहरणम् ॥ ४८ ॥

अथ त्रस्तजात्युदाहरणं आह । हे कुरङ्गाक्षि हे सीते एष दशमुखो रावणः आरक्तनेत्रश्रेण्या भीषणवदनसमूह उल्लासितविंशतिभुजवननिवेशः स्थाने वर्तत इति शेषः ॥ ४९ ॥

उपमानेन सादृश्यमुपमेयस्य यत्र सा ॥
प्रत्ययाऽव्ययतुल्यार्थसमासैरुपमेयता ॥ ५० ॥

गत्या विभ्रममन्दया प्रतिपदं या राजहंसायते
यस्याः पूर्णशशाङ्कमण्डलमिव श्रीमत्सदैवाननं ।
यस्याश्चानुकरोति नेत्रयुगुलं नीलोत्पलानि श्रिया
तां कुन्दाग्रदतीं त्यजन् जिनपती राजीमतीं पातु वः ५१

चन्द्रवद्वदनं तस्याः नेत्रे नीलोत्पले इव ॥
पक्वबिम्बं हसत्योष्ठः पुष्पधन्वधनुर्भ्रुवः ॥ ५२ ॥

अथोपमाया लक्षणमाह । उपमेति यत्र उपमानेन दृष्टान्तेन सह उपमेयस्य पदार्थस्य सादृश्यं स्यात् सा उपमा मता । कैः कृत्वा प्रत्ययैः अव्ययादिभिः अव्ययैरिवादिभिः तुल्यार्थैरनुकरोत्यादिभिः समासैर्बहुव्रीह्यादिभिः ॥ ५० ॥

अथोदाहरणं यथा । गत्येति । जिनपतिः श्रीनेमिनाथो वो युष्मान्पातु । किंकुर्वन् राजीमतीं त्यजन् परिहरन् किंभूतां कुन्दाग्रदतीं कुन्दवदग्रा मनोज्ञा दन्ता यस्याः सा तथा तया राजीमती विलासमन्थरया गत्या राजहंसीइवाचरतीति राजहंसायते इति प्रत्ययोपमा १ यस्या वदनं श्रीमत् चन्द्रमिव इत्यव्ययोपमा २ यस्या नेत्रयुगुलं श्रिया नीलोत्पलानि अनुकरोति तुल्यार्थोपमा ३ कुन्दाग्रदतीमिति समासोपमा ४ ॥ ५१ ॥

पुनर्लघुच्छन्दस्युपमां दर्शयति । चन्द्रवत् । तस्या वदनं मुखं पूर्णेन्दुवद्वर्तत इति प्रत्ययोपमा १ । तस्या ओष्ठः पक्वबिम्बफलं हसति अनुकरोति ततोपि उत्कृष्टतरत्वात् इति तुल्यार्थोपमा २ तस्याः किंभूतायाः पुष्पधन्वधनुर्भ्रुवः पुष्पधन्वा कन्दर्पस्तस्य धनुस्तद्वद्भ्रुवौ यस्याः सा तथा तस्या इति समासैरुपमा ३ तस्या नेत्रे नीलोत्पले इव इन्दीवरकमले इवेत्यव्ययोपमा ४ ॥ ५२ ॥

मयभरिअमाणसस्स वनिच्चं दोसाअरस्स ससिणुव्व ।

तुह विरहे तिई मुहं संकुइअं सुहअ कुमुअं व्व ॥ ५३ ॥

तं नमह वीयरायं जिणं दमुद्दालि अदढअरकसायं ॥

जस्समणं व्वसरीरंमणंसरीरं वसुपसंणं ॥ ५४ ॥

ये देव भवतः पादौ भवत्पादाविवाश्रिताः ।

ते लभन्तेद्भुतां सव्यां श्रियं त इव शाश्वतीम् ॥५५॥

मयेति । हे सुभग तव विरहे तस्याः स्त्रियो मुखं संकुचितं निःश्रीकं जातमित्यर्थः । कीदृशस्य तव मदभृतमानसस्यापि नित्यं दोषाकरस्य । कस्येव किमिव शशिनो विरहे कुमुदमिव यथा चन्द्रस्य वियोगे कुमुदं संकुचति । मृगभृतमानसस्य मृगाश्रितमध्यस्य दोषायां रात्रौ कराः किरणा यस्य स तथा तस्य इत्यव्ययोपमाविशेषः ॥ ५३ ॥

तंनमहेति । अहो जना यूयं तं वीतरागं नमत सामान्यकेवलिनां इन्द्रं स्वामिनं । उद्दलिता मर्दिता दृढतरा कषायाः कामक्रोधादयो येन तथा तं यस्य भगवतः शरीरं अविक्रियाभेदेन मन इव सुप्रसन्नं वर्तते । यस्य मनः शरीरमिव सुप्रसन्नं वर्तते इयं उपमेयोपमा अथवा अन्योन्योपमा ॥ ५४ ॥

य इति । हे देव ये पुरुषाः भवतः पादा इव भवत्पादौ आश्रिताः ते पुरुषास्त इव अद्भुतां श्रियं लभन्ते । अत्र पादयोः पादयोरेवोपमानं तेषां पुरुषाणां तेषामेवोपमानं अत इयमन्योन्योपमा एकस्य वोपमानस्य उपमेयत्वे अनन्वयित्वं अतुल्योपमेयत्वम् ॥ ५५ ॥

आलोकनं च वचनं च निगूहनं च
यासां स्मरन्नमृतवत् सरसं कृशस्त्वं ।
तासां किमङ्ग पिशिताशिपुरीषपात्रं
गात्रं विचिन्त्य सदृशां न निराकुलोसि ॥ ५६

कलेव चन्द्रस्य कलङ्कमुक्तामुक्तावली वो गुरुणा प्रप
जगत्त्रयायाभिमतं ददाना जैनेश्वरी कल्पलतेव मूर्तिः

विभिन्नलिङ्गवचनां नातिहीनाधिकां च ताम् ।
निबध्नन्ति बुधाः क्वापि लिङ्गभेदं तु मेनिरे ॥ ५८

आलोकनमिति । हे मित्र आसां सुष्ठु लोचननारीणां अ
मृतवत्सरसं आलोकनं दर्शनं वचनमाभाषणं निगूहमालिङ्गनं
रन् सन् कृशो वर्तसे। अङ्ग इति कोमलामन्त्रणे । तासां सु
मांसरुधिराणां मध्यस्थानं गात्रं शरीरं विचिन्त्य किं न नि
कुलोसि । किं सुखी भवसि इयं उपमेयानां आलोकनादे
समुच्चयादुपमेयसमुच्चयोपमा ॥ ५६ ॥

कलेति । जैनेश्वरी मूर्तिर्वर्तते किंभूता कलङ्कमुक्ता । केव चन्द्र
कलेव संपूर्णे चन्द्रे कलङ्को नैव कस्यां कलायां गुरुभिर्गुणैः
पन्ना आश्रिता केव मुक्तावलीव सा गुरुणा गुणेन नवदोरके
प्रपन्ना प्राप्ता भवति जगत्त्रयस्य वाञ्छितं ददाना । केव
ल्पलतेव सापि इप्सितं ददाति अत्र एकस्या मूर्तेस्त्रिकोपम
योगात् उपमानसमुच्चयोपमेयं वा मालोपमेयम् ॥ ५७ ॥

विभिन्नेति । उपमायां दोषानाह । बुधा विद्वांसस्तामुप
मोपमेयात् पृथग्लिङ्गवचनां निबध्नन्ति । च पुनः नातिहीनां
त्यधिकां च न निबध्नन्ति क्वचित् बुधालिङ्गभेदं मेनिरे मन्य
न्ते स्म ॥ ५८ ॥

हिममिव कीर्तिर्धवला चन्द्रकलेवातिनिर्मला वाचः ॥
ध्वाङ्क्षस्येव च दास्यं नभ इव वक्षश्च ते विपुलम् ॥ ५९॥
शुनीयं गृहदेवीव प्रत्यक्षा प्रतिभासते ॥
खद्योत इव सर्वत्र प्रतापश्च विराजते ॥ ६० ॥
सफेनपिण्डः प्रौढोर्मिरब्धिः शार्ङ्गीव शंखभृत् ॥
श्चोतन्मदः करी वर्षन् विद्युत्वानिव वारिदः ॥६१ ॥

श्लोकत्रयेण दोषोदाहरणानि यथा । राजेन्द्र तव कीर्तिः स्त्रीलिङ्गे हिमं तु नपुंसके वर्तते अत्र पृथक् लिङ्गं हे राजेन्द्र अत्र तव वाचो वाण्यश्चन्द्रकलेव अतिनिर्मला वर्तन्ते । वाच इति बहुवचनं शशिकलेति एकवचनं अतोत्र वचनभेदः । हे राजेन्द्र तव दाक्ष्यं दक्षिणत्वं ध्वाङ्क्षस्य काकस्येव वर्तते । उपमानं हीनमत्र । हे राजेन्द्र तव वक्षो हृदयं नभ इव विपुलं विस्तीर्णं वर्तते अत्रोपमानाधिक्यं चेति इत्थं न क्रियते ॥ ५९ ॥

शुनीति । इयं शुनी गृहे देवी प्रत्यक्षा शोभते अत्रोपमाधिक्यं च पुनः प्रतापः सर्वत्र खद्योत इव विराजते अत्र हीनोपमा इत्थमपि न क्रियते ॥ ६० ॥

स फेनेति ॥ सफेनपिण्डैः डिण्डरपिण्डैः सह वर्तते इति स तथा प्रौढा महान्तः ऊर्मयः कल्लोलः यस्मिन् स तथा। क इव शार्ङ्गीव शंखभृत् अत्राब्धेर्विष्णोश्च उपमानेन पिण्डस्य शंखोपमा । ऊर्मीणां चोपमाने विशेषणं नास्ति इति विशेषणहीनोपमा इत्थमपि न क्रियते । करी वर्तते किंभूतः श्चोतन्मदः क्षरन्मदः क इव वारिद इव वर्षन् । किंभूतः विद्युत्वानत्र अधिकविशेषणोपमा अतोऽधिकोपमादोषः ॥ ६१ ॥

मुखं चन्द्रमिवालोक्य देवाह्लादकरं तव ॥
कुमुदन्ति मुदाक्षीणि क्षीणमिथ्यात्वसंपदाम् ॥ ६२ ॥
निजजीवितेशकरजाग्रकृतक्षतपङ्क्तयः शुशुभिरे सुरते ॥
कुपितस्मरप्रहितबाणव्रणजर्जरा इव सरोहृशः ॥ ६३ ॥

हस्ताग्रविन्यस्तकपोलदेशा
मिथो मिलत्कङ्कणकुण्डलश्रीः ॥
सिषेच नेत्रस्रवदश्रुवारैर्दोः-
कन्दलीं काचिदवश्यनाथा ॥ ६४ ॥

अथ गुणानुदाहरति ॥ मुखमिति । देव तव मुखं चन्द्रमिवालोक्य दृष्ट्वा क्षीणमिथ्यात्वसंपदां पुंसामक्षीणि लोचनानि कुमुदन्ति कुमुदवदाचरन्ति ॥ चन्द्रवदाह्लादकरं हर्षोत्पादकं मुखं नपुंसके चन्द्रः पुंल्लिङ्गे इदं वाग्भटालङ्कारस्य मते दूषणम् । मुखमुभयलिङ्गं नपुंसकद्वारेण प्रदर्शितम् । इति लिङ्गभेदेऽपि उपमा स्यात् ॥ ६२ ॥

उत्प्रेक्षामध्ये समासोपमायां लिङ्गभेदं दर्शयति । निजजीवितेति । सरोजवत्कमलवत् दृशौ यासां तास्तथा सरोजं नपुंसके दृक् स्त्रीलिङ्गे अत्र नपुंसकलिङ्गस्त्रीलिङ्गयोर्भेदस्य समासेन तिरोभूतत्वान्न दोषः। सरोजदृशः स्त्रियः शुशुभिरे शोभिताः किंभूताः निजभर्तृनखाग्रैः कृताः क्षतपङ्क्तयो व्रणश्रेणयो यासां तास्तथा । क सति सुरते संभोगसमये सति । उत्प्रेक्षते । कुपितो यः स्मरः कंदर्पस्तेन प्रहितो यो बाणगणस्तस्य व्रणैर्जर्जरा इव ॥ ६३ ॥

अथ रूपके लिङ्गविभेदं दर्शयति । हस्ताग्रेति । दोः पुंसि

बहुवीरेप्यसावेको यदुवंशेऽद्भुतोऽभवत् ॥
किं केतक्यां दलानि स्युः सुरभीण्यखिलान्यपि ॥ ६५ ॥
रूपकं यत्र साधर्म्यादर्थयोरभिदा भवेत् ॥
समस्तं वाऽसमस्तं वा खण्डं वाऽखण्डमेव वा ॥ ६६ ॥

कन्दली स्त्रियाम्। पुंलिङ्गस्त्रीलिङ्गयोर्भेदस्य समासेन तिरोभूतत्वान्न दोषः। उपमेव तिरोभूतभेदं रूपकमिष्यते। काचित् स्त्री अवश्यनाथा कुपितभर्तृका दोःकन्दलीं नेत्रक्षरदश्रुसमूहैः सिषेच। किम्भूता यत एव हस्ताग्रविन्यस्तकपोलदेशा हस्ताग्रे विन्यस्तो दत्तः कपोलदेशो ययासा तथा। अत एव मिथः परस्परं मिलन्ती एकीभवन्ती कङ्कणकुण्डलयोः श्रीः शोभा यस्याः सा तथोक्ता ॥ ६४ ॥

अथ प्रतिवस्तूपमायां लिङ्गभेदं वचनभेदं दर्शयति। बहुवीर इति। असावेकः श्रीनेमिर्यदुवंशे अजनिष्ट परमोत्तमो जातः किम्भूते यदुवंशे बहुवीरेपि बहवो वीरा यस्मिन् तस्मिन् स तथा। तस्मिन् दृष्टान्तः केतक्यामखिलान्यपि दलानि पत्राणि किं सुरभीणि स्युः अपि तु अल्पान्येव कानिचित् सुरभीणि भवन्ति। अत्र वंशस्य केतक्योपमानं वीराणां वान्यसुरभिदलोपमानं वंशः पुंल्लिङ्गे केतकी स्त्रीलिङ्गे वीराश्च पुंसि दलानि क्लीबे। नेमिश्चैकः सुरभिदलानि बहूनि एवं च प्रतिवस्तूपमायां लिङ्गवचनभेदो भवति तत्र दूषणम् ॥ ६५ ॥

अथ रूपकभेदानाह। रूपकमिति। यत्र साधर्म्यात् सादृश्यात् अर्थयोरुपमोपमेययोरभेद ऐक्यं भवति। तद्रूपकं तच्चतुःप्रकारं समस्तं समासयुक्तं द्विधा द्विप्रकारं खण्डमखण्डं च असमस्तं समासारहितमपि द्विधा खण्डं अखण्डं च। निरवयवं सावयवं वेत्यर्थः ॥ ६६ ॥

कीर्णान्धकारालकराजमाना
निबद्धतारास्थिमणिः कुतोपि ॥
निशा पिशाची व्यचरद्दधाना
महान्त्युलूकध्वनिफेत्कृतानि ॥ ६७ ॥

संसार एव कूपः सलिलानि विपत्तिजन्मदुःखानि ॥
इह धर्म एव रज्जुस्तस्मादुद्धरति निर्मग्नात् ॥ ६८ ॥

अधरं मुखेन नयनेन रुचिं
सुरभित्वमब्जमिव नासिकया ॥
नववर्णिनीवदनचन्द्रमस-
स्तरुणा रसेन युगपत्पपुः ॥ ६९ ॥

तत्र पूर्वमखण्डं समस्तमादौ दर्शयति । कीर्णेति । निशापिशाची रात्रिराक्षसी कुतोपि स्थानात् पर्यटति स्म । किंभूता कीर्णान्धकाराण्येव अलकाः केशास्ते शोभमाना निबद्धास्तारा एवास्थिमणयो यया सा तथा । उलूकानां घूकानां ध्वनय एव फेत्कृतानि फेत्कारास्तानि दधाना अत्र निशया उपमेयेन सह पिशाच्या उपमानस्य समानस्य समासकरणात् समस्तम् । संपूर्णपिशाचीधर्मकथनात् सर्वविशेषणानामपि तुल्यत्वाच्च अखण्डम् ॥ ६७ ॥

रूपकं दर्शयति । संसारेति । सुगमम् । अत्र संसारे निखिलकूपतारोपणात् अखण्डम् । समासरहितत्वात् च असमस्तम् ६८

अथ समस्तं समाससहितं खण्डं असंपूर्णं दर्शयति । अधरमिति । तरुणाः पुरुषा नवकामिनीमुखचन्द्रस्य अधरं ओष्ठं मुखेन कृत्वा रुचिं नयनेन कृत्वा नासिकया सुरभित्वं रसेन परमादरेण युगपत् समकालं पपुः पिबन्ति स्म । किंभूतं सुरभित्वं उत्प्रेक्षते अब्जमिव कमलमिव अत्र चन्द्रमसो धर्मो

ज्योत्स्नया धवलीकुर्वन्नुर्वीं सकुलपर्वताम् ॥
निशाविशालकमलमुदेति स्म निशाकरः ॥ ७० ॥
अनुत्पत्ताविवादीनां वस्तुनः प्रतिवस्तुना ॥
यत्र प्रतीयते साम्यं प्रतिवस्तूपमा तु सा ॥ ७१ ॥
बहुवीरेप्यसावेको यदुवंशेद्भुतोभवत् ॥
किं कैतक्यां दलानि स्युः सुरभीण्यखिलान्यपि ७२
वस्तुन्यन्यत्र कुत्रापि तत्तुल्यस्यान्यवस्तुनः ॥
निश्चयोन्यत्र जायेत भ्रान्तिमान् संस्मृतो यथा॥७३॥
हेमकमालं तिवअणे णिलुप्पलंति पसअच्छि ॥
कुसुमं ति तुह्म हसिए णिवडर भमराणरिं छोली॥७४॥

न कश्चित्प्रतिपादित इति खण्डम् । नववर्णिनीवदनचन्द्रमस इत्यत्र समासकरणात् समस्तम् ॥ ६९ ॥

अथ समस्तं रूपकं दर्शयाति। ज्योत्स्नयेति। निशाकरश्चन्द्र उदेति स्म निशायां रात्रौ विलासार्थक्रीडाकमलमिव। ज्योत्स्नया कान्त्या कुलाचलसहितां उर्वीं धवलीकुर्वन् ॥ ७० ॥

अथ प्रतिवस्तूपमाया लक्षणमाह। अन्विति। यत्र यस्मिन्नलङ्कारे वस्तुनः प्रतिवस्तुना सह साम्यं सादृश्यं प्रतीयते ज्ञायते सा प्रतिवस्तूपमा। क्व सत्यां इवादीनाम् इव वत् इत्याद्यव्ययप्रत्ययतुल्यार्थसमासादीनां अनुत्पत्तौ सत्यां अग्रहणे सति ॥ ७१ ॥

अथास्या उदाहरणम् ॥ बह्विति । एतद्व्याख्या प्राग्वत् ज्ञेया ॥ ७२ ॥

अथ भ्रान्तिमतो लक्षणमाह । वस्तुनीति । यत्रालङ्कारेऽन्यत्र कुत्रापि वस्तुनि तत्तुल्यस्यान्यवस्तुनो निश्चयो जायेत स भ्रान्तिमान् स्मृतः ॥ ७३ ॥

तदुदाहरणम् । हे प्रसृताक्षि तव वदने हेमकमलमिति कला

उक्तिर्यत्र प्रतीतिर्वा प्रतिषेधस्य जायते ।
आचक्षते तमाक्षेपमलंकारं बुधा यथा ॥ ७५ ॥

इन्द्रेण किं यदि स कर्णनरेन्द्रसूनु-
रैरावतेन किमहो यदि तद्विपेन्द्रः ॥
दम्भोलिनाप्यलमयं यदि तत्प्रतापः
स्वर्गोप्ययं ननु मुधा यदि तत्पुरी सा ॥ ७६ ॥

यस्यास्ति नरकक्रोडनिवासरसिकं मनः ॥
सोस्तु हिंसानृतस्तेयतत्परः सुतरां जनः ॥ ७७ ॥

लोचने नीलोत्पलमिति कृत्वा च पुनः हसिते हास्ये कुसुममिति कृत्वा भ्रमराणां श्रेणिः निपतति ॥ ७४ ॥

आक्षेपलक्षणमाह उक्तिरिति । यत्रालङ्कारे उक्तिः शब्देन प्रतीतिः अर्थसामर्थ्येन ज्ञानप्रतिषेधोस्य जायते तमाक्षेपनाम्नाऽलङ्कारमाचक्षते कथयन्ति ॥ ७५ ॥

अथोदाहरणत्रयं दर्शयति । इन्द्रेणेति । यदि कर्णनरेन्द्रसूनुः श्रीजयसिंहदेवो वर्तते । इन्द्रेण किमिति इन्द्रस्य प्रतिषेधः यदि तं द्विपेन्द्रः श्रीकलशनामधेयः करी वर्तते। तर्हि ऐरावतेन किमिति ऐरावतस्य प्रतिषेधः। यदि तत्प्रतापो वर्तते तर्हि दम्भोलिना वज्रेणालमत्यर्थमलं सृतं इति वज्रस्य प्रतिषेधः । यदि सा तत्पुरी अणहिल्लपत्तनाभिधाना नगरी वर्तते तर्हि ननु निश्चयेन अयं स्वर्गोपि मुधा इति स्वर्गप्रतिषेधः ॥ ७६ ॥

यस्येति । यस्य पुरुषस्य मनो नरकक्रोडनिवासे नरक एव क्रोड उत्संगः तत्र निवासे वसने रसिकमस्ति स जनः हिंसा जीवविध्वंसोऽनृतमलीकं स्तेयं चौर्यं तत्परः सुतरामतिशयेनास्तु एतेन हिंसादि न कर्तव्यमिति सूचितम् ॥ ७७ ॥

इच्छान्ति येण कित्तिं कुणन्ति करुणाकणं पि जेणेअ ॥
तेधणजक्खुव्वणरा दिंति धणं मरणसमये वि ॥ ७८ ॥

इदमेतदिदं वेति साम्याद्बुद्धेर्हि संशयः ॥
हेतुभिर्निश्चयः सोपि निश्चयान्तः स्मृतो यथा ॥७९ ॥

किं केशपाशः प्रतिपक्षलक्ष्म्याः
किंवा प्रतापानलधूम एषः ॥
दृष्ट्वा भवत्पाणिगतं कृपाण-
मेवं कवीनां मतयः स्फुरन्ति ॥ ८० ॥

इन्द्रः स एष यदि किं न सहस्रमक्ष्णां
लक्ष्मीपतिर्यदि कथं न चतुर्भुजोसौ ॥

इच्छन्तीति । ये पुरुषाः कीर्तिं नेच्छन्ति । य कणमपि करुणां दयां न कुर्वन्ति । ते पुरुषा धनदयक्षवत् मरणसमयेपि धनं ददति अपि तु न । उभयत्रार्थसामर्थ्यात् काका व्याख्यया कृत्वा निषेधः प्रतीयते। अत्र कीर्तेरतिच्छायनिषेधः। अदयाया निषेधः ॥ ७८ ॥

अथासंशयलक्षणमाह । इदमिति । साम्यात् सादृश्यात् इति बुद्धेः सकाशात् संशयालङ्कारः स्मृतः। इति किं इदमेतद्वस्तु इदं वा सोपि संशय एव हेतुभिर्निश्चयान्तः सन् निश्चयालंकारः स्यात् ॥ ७९ ॥

अथ संशयोदाहरणम् । किं केशेति। वैरिणां लक्ष्मीरनेन राज्ञा केशेषु धृत्वा आकृष्टा वर्तते तत् कविः शङ्कते। हे राजन् भवत्पाणिगतं कृपाणं खड्गं दृष्ट्वा कवीनामेवं मतयः स्फुरन्ति। एवमिति किं प्रतिपक्षलक्ष्म्याः केशपाशः वा प्रतापानलधूमः ॥ ८० ॥

अथ निश्चयान्तोदाहरणम्। इन्द्र इति। स एष यदि इन्द्रः

आः स्यन्दनध्वजधृतोद्धुरताम्रचूडः
श्रीकर्णदेवनृपसूनुरयं रणाग्रे ॥ ८१ ॥
अन्वयख्यापनं यत्र क्रियया स्वतदर्थयोः ॥
तं दृष्टान्तमिति प्राहुरलंकारं मनीषिणः ॥ ८२ ॥
पतितानां संसर्गं त्यजन्तु दूरेण निर्मला गुणिनः ॥
इति कथयन् जरतीनां हारः परिहरति कुचयुगलम् ८३ ॥
केन चिद्यत्र धर्मेण द्वयोः संसिद्धसाम्ययोः ॥
भवत्येकतराधिक्यं व्यतिरेकः स उच्यते ॥ ८४ ॥

स्यात्तदाऽक्ष्णां किं न सहस्रं । अथ विष्णुः स्यात्तदा चतुर्भुजः कथं न । आः ज्ञातं अयं रणाग्रे कर्णदेवनृपसूनुः श्रीजयसिंहदेवः वर्तते । किं तदुपलक्षणं तदाह । स्यन्दनस्य ध्वजे धृत उद्धुरस्ताम्रचूडः कुक्कुटो येन स तथा अत्र हेतुभिः कारणैर्निश्चयान्तः संशयो ज्ञातः ॥ ८१ ॥

दृष्टान्तलक्षणमाह । अन्वयेति । मनीषिणो विद्वांसः तमलङ्कारं दृष्टान्तं प्राहुः । यत्रालंकारे क्रियया कर्तव्येन स्वतदर्थयोरुपमानोपमेययोः दृष्टान्तदार्ष्टान्तिकयोरन्वयख्यापनं भवति अनुगताकाराप्रवृत्तिसम्बन्धः स्यात् ॥ ८२ ॥

पतितानामिति । हारो मुक्तादिगुम्फितः जरतीनां वृद्धस्त्रीणां इति कथयन् कुचयुगलं परिहरति । इतीकिं निर्मला गुणिनः पतितानां समाजभ्रष्टानां संसर्गं दूरेण त्यजन्तु । हारोपि गुणी ससूत्रः निर्मलः स्वच्छश्च जरतीनां कुचावपि पतितौ रिक्तपेशीवत् मुक्तकाठिन्यौ भवतः । अत्र प्रथमपादद्वये मुख्येर्थे हारो दृष्टान्तः ॥ ८३ ॥

अथ व्यतिरेकलक्षणमाह । केनेति । यत्र द्वयोर्वस्तुनोः केनचिदेकेन पौरुषादिधर्मेण निष्पन्नसमभावयोर्मध्ये एकस्यापि अधिकता भवति स व्यतिरेकः ॥ ८४ ॥

अस्त्वस्तु पौरुषगुणाञ्जयसिंहदेव-
पृथ्वीपतेर्मृगपतेश्च समानभावः ॥
किं त्वेकतः प्रतिभटा समरं विहाय
सद्यो विशान्ति वनमन्यविशङ्कमानाः ॥ ८५॥
नैतदेतदिदं ह्येतदित्यपह्नवपूर्वकम् ॥
उच्यते यत्र सादृश्यादपह्नुतिरियं यथा ॥ ८६ ॥
नैतान्निशायां सितसूच्यभेद्यमन्दीकृतालोकनमन्धकारम् ॥
निशागमप्रस्थितपञ्चबाणसेनासमुत्थापित एष रेणुः ८७॥
उपमेयं समीकर्तुमुपमानेन योज्यते ॥
तुल्यैककालक्रियया यत्र सा तुल्ययोगिता ॥ ८८ ॥

तदुदाहरणम् । अस्त्विति । जयसिंहदेवपृथ्वीपतेश्च पुनः मृगपतेः सिंहस्य पौरुषगुणात् समानभावोस्तु । इति समता एकस्य राज्ञः आधिक्यमाह । किं तु अयं विशेषः एकतो राज्ञः प्रतिभटाः शत्रुभटाः सङ्ग्रामं मुक्त्वा वनं विशन्ति । अन्यं मृगपतिमशङ्कमाना इति व्यतिरेकालङ्कारः ॥ ८५ ॥

अथापह्नुतेर्लक्षणम् । नेति । यत्र सादृश्यादित्यपह्नवपूर्वकं इति विद्यमानवस्तुनोः अपलापपूर्वकमुच्यते । इतीति किम् । एतदिदं नहि निश्चितं एतदिदं सा इयं इत्यपह्नुतिः ॥ ८६ ॥

तदुदाहरणम् । नैतादिति । निशायां रात्रौ शिता तीक्ष्णा सूचिः लोहशलाका तया भेद्यमेतावता निबिडं एतदन्धकारं न किं तु अन्धीकृतानि आलोकनानि लोचनानि येन तत्तथा किं तु एष रेणुः । किंभूतः निशागमे रात्र्यागमे सर्वलोकविजयाय प्रचलितो यः पञ्चबाणस्तस्य सैन्येनोत्थापितः ॥ ८७ ॥

अथ तुल्ययोग्यतालक्षणमाह । उपमेयामिति । यत्र उपमेयं वर्ण्यं वस्तु उपमानेन सह समीकरणाय योज्यते कया तुल्यैक-

तमसा लुप्यमानानां लोकेऽस्मिन् साधुवर्त्मनाम् ॥
प्रकाशनाय प्रभुता भानोस्तव च दृश्यते ॥ ८९ ॥

कल्पना काचिदौचित्याद्यत्रार्थस्य सतोऽन्यथा ॥
द्योतिते वादिभिः शब्दैरुत्प्रेक्षा सा स्मृता यथा ॥ ९० ।

नभस्तले किंचिदिव प्रविष्टाश्चकाशिरे चन्द्ररुचिप्ररोहाः ॥
जगद्गिलित्वा हसतः प्रमोदाद्दन्ता इव ध्वान्तनिशाचरस्य९'

कालक्रियया । एकस्मिन् काले क्रिया तुल्या चासौ तया तुल्यकालक्रियया सा तुल्ययोगिता ॥ ८८ ॥

अथोदाहरणम् । तमसेति । हे गुरो साधुवर्त्मनां प्रकाश॰ प्रभुता समर्थता भानोः सूर्यस्य च पुनस्तव दृश्यते । किंभूतान तमसा अन्धकारेण पक्षेऽज्ञानेन लुप्यमानानामदृश्यानां साधुवर्त्म नां प्रधानमार्गाणां गुरुमार्गाणां पक्षे यतिमार्गाणां । अत्र दृश्य॰ इति वर्तमानकालस्यैकक्रियासम्बन्धता उभयत्रापि सूर्यस्य गुरो श्च तुल्यक्रियतादर्शनात् ॥ ८९ ॥

अथोत्प्रेक्षालक्षणमाह । कल्पनेति । यत्रान्यथा वर्तमानस्‍ वस्तुनः औचित्यात् योग्यत्वात् काचित्कल्पना क्रियते सोत्प्रेक्ष स्मृता किंभूता इवादिभिः शब्दैर्द्योतिता प्रकटिता । आदिश ब्दग्रहणात् जाने शङ्के ध्रुवं मन्ये यथा खलु च वा इवत् वन अपीति नैवं चोत्प्रेक्षते रूपकं विदुः ॥ ९० ॥

अथोदाहरणं । नभ इति । चन्द्रकान्त्यङ्कुरा आकाशे किं चिदिव अल्पमिव प्रविष्टाः प्रसृताश्चकाशिरे शुशुभिरे । उत्प्रे क्षते । जगत् गिलित्वा प्रमोदात् हर्षात् हास्यवशीनान्धकाररा क्षसस्य दन्ता इव ॥ ९१ ॥

र्थमन्यार्थन्यासो व्याप्तिपुरःसरः ।
न्तरन्यासः श्लिष्टोऽश्लिष्टश्च स द्विधा ॥ ९२ ॥
णत्वमक्ष्णामसिताब्जभासां
रां प्रचारस्त्वपरप्रकारः ॥
भूव पानान्मधुनो वधूना-
चिन्तनीयो हि सुरानुभावः ॥ ९३ ॥
ण्डाः कम्पिताः कुञ्जराणां
सर्गं पादपाश्चारु चक्रुः ॥
कारा: किं प्रयच्छन्ति किंचित्
यावन्नोद्धतैर्वीतशङ्कम् ॥ ९४ ॥

ासलक्षणम्। उक्तेति । उक्तस्य पूर्वं प्रतिपादितस्य नार्थं अन्यार्थन्यासः । किंभूतः व्याप्तिपुरःसरः । ते इति व्याप्तिस्तत्पूर्वकः । स द्विधा एकः श्लिष्टः ष्टः श्लेषरहितः ॥ ९२ ॥

ोदाहरणम् । शोणत्वमिति वधूनां स्त्रीणां मधुनो त् अक्ष्णां लोचनानां रक्तत्वं बभूव । किंभूतानां ाब्जवत् नीलोत्पलवत् भाः कान्तिर्येषां तानि तथा गेरां वाणीनां प्रचारः उच्चारः अपरप्रकारोऽन्य- उक्तमेवार्थं अन्यप्रकारेण दृढयति । एवं घटते हि ् सुरानुभावोऽचिन्ता अथ च सुरानुभावो देवानु- वश्च ॥ ९३ ॥

ोदाहरणम् । शुण्डेति । पादपा वृक्षाः कुञ्जराणां कृत्वा कम्पिताः सन्तः चारु यथा भवति तथा पुष्पो- अत्रान्यमर्थं न्यस्यति । उद्धतैः पुरुषैः वीतशङ्कं ाथा यावदाक्रान्ता न भवन्ति तावत् स्तब्धाकारा

उच्यतेवक्तुमिष्टस्य प्रतीतिजननक्षमम् ॥
सधर्मंसासमासोक्तिरन्योक्तिर्वाभिधीयते ॥ ९५ ॥

मधुकर मा कुरु शोकं विचर करीरद्रुमस्य कुसुमेषु ॥
घनतुहिनपातदलिता कथं नु सा मालती मिलति ॥ ९६ ॥

चिन्तयति न चूतलतां याति नृजातिं न केतकीं क्रमते ॥
कमललताभग्नमना मधुपयुवा केवलं क्वणति(क्षिप्तेयमार्या)९७

अथ समासोक्तिलक्षणम् । उच्यत इति । यत्र वक्तुमिष्टस्य वस्तुनः प्रतीतिजननक्षमं प्रतीत्युत्पादनसमर्थं सधर्मं सदृशमन्यत् वस्तु उच्यते । इयं समासोक्तिर्भवति । नामान्तरेऽन्योक्तिः कथ्यते ॥ ९५ ॥

अथोदाहरणम् । माध्विति कस्मिंश्चिन्मनःप्रियायां मृतायां सत्यां शोकं न कुर्वीति सखी प्राह । हे मधुकर त्वं शोकं मा कुरु करीरद्रुमस्य निष्पत्रवृक्षकुसुमेषु विचर । इति खेदे मालती कथं मिलति । किंभूता बहुतराहिमपातेन दग्धा एतावता त्वमन्यस्त्रीषु रमस्व । सा भवत्प्रिया दैवहता कथं मिलति इत्युक्तं भवति ॥ ९६ ॥

उदाहरणान्तरम् । चिन्तयतीति । मधुपयुवा तरुणभ्रमरः कमललताभग्नमनाः पद्मिनीसंभग्नचित्तः सन् केवलं क्वणति रोदितीत्यर्थः । स च किं करोति तदाह । चूतलतां आम्रलतां न चिन्तयति किं च जातिं न याति न गच्छति न च केतकीं क्रकचच्छदां क्रमते आक्रमते । अर्थान्तरं कश्चन युवा कया नायिकया भग्नं मनो यस्येति सन् अन्याः काश्चन नायिकाः न पश्यति केवलं रोदितीति मुख्योर्थः ॥ ९७ ॥

विना कारणसद्भावं यत्र कार्यस्य दर्शनम् ॥
नैसर्गिकगुणोत्कर्षभावनात्सा विभावना ॥ ९८ ॥
अनध्ययनविद्वांसो निर्द्रव्यपरमेश्वराः ॥
अनलंकारसुभगाः पान्तु युष्मान् जिनेश्वराः॥ ९९ ॥
आदिमध्यान्तवर्त्यैकः पदार्थेनार्थसंगतिः ॥
वाक्यस्य यत्र जायेत तदुक्तं दीपकं यथा ॥ १०० ॥
जगुस्तव दिवि स्वामिन् गन्धर्वाः पावनं यशः ॥
किन्नराश्च कुलाद्रीणां कन्दरेषु मुहुर्मुहुः ॥ १०१ ॥

विभावनालक्षणमाह । विनेति । यत्र कारणसद्भावं विना कार्यस्य दर्शनं भवति सा विभावनेत्युच्यते । कुतः नैसर्गिकस्य स्वाभाविकस्य गुणोत्कर्षस्य भावनात् प्रकटनात् ॥ ९८ ॥

उदाहरणम् । अनध्ययनेति । जिनेश्वरा वो युष्मान् पान्तु रक्षन्तु । किंभूताः अनध्ययनेन पठनाभावेन विद्वांसः अनध्ययनं कारणं विद्वत्त्वं कार्यं । अन्ये जना अध्ययनेन विद्वांसो भवन्ति जिनेश्वरास्तु अध्ययनं विनैव विद्वांसः। एवमग्रेपि । अन्यलोकाः द्रव्येण परमैश्वर्यभाजो भवन्ति जिनेश्वरास्तु अकिञ्चना अपि परमेश्वराः अन्येऽलङ्कारैः सुभगाः ते तु तैर्विना परमशोभाढ्याः स्वाभाविकज्ञानपरमोत्कृष्टरूपातिशयत्वात् ॥ ९९ ॥

अथ दीपकालंकारलक्षणमाह । आदीति । अत्र आदिवर्तिना मध्यवर्तिना वा अंतवर्तिना वा एकपदार्थेन क्रियालक्षणेन कारकलक्षणेन वा वाक्यस्य संगतिर्जायेत तद्दीपकमुक्तम् ॥ १०० ॥

अथ तदुदाहरणम् । जगुरिति । हे स्वामिन् राजेन्द्र गन्धर्वाः स्तवनं पवित्रीकरणं यशः दिवि देवलोके जगुर्गायन्ति स्म चेति पुनः किन्नराः कुलाचलानां कन्दरेषु मुहुः वारंवारं मुदा

विराजन्ते तमिस्राणि द्योतन्ते दिवि तारकाः ॥
विभान्ति कुमुदश्रेण्यः शोभन्ते निशि दीपकाः ॥१०२॥

वस्तूनां वक्तुमुत्कर्षमसंभाव्यं यदुच्यते ॥
वदन्त्यातिशयाख्यं तमलंकारं बुधा यथा ॥ १०३ ॥

त्वद्दारितारितरुणीश्वसितानिलेन
संमूर्छितोर्मिषु महोदधिषु क्षितीश ॥
अन्तर्लुठद्गिरिपरस्परशृङ्गसंग
घोरारवैर्मुररिपोरपयाति निद्रा ॥ १०४ ॥

हर्षेण तव पावनं यशो जगुः । अत्र जगुरिति क्रियापदमादावस्ति उभयत्रापि सम्बद्धं अतो दीपकम् । एवं मध्यक्रियापदान्त्यक्रियापदे सर्वत्र सम्बध्येते ॥ १०१ ॥

अथ बहुक्रियायोगे दीपकोदाहरणं दर्शयति । विराजन्त इति । निशि रात्रौ तमिस्राणि तमांसि विराजन्ते । रात्रौ दिवि आकाशे तारका द्योतन्ते । निशि कुमुदश्रेण्यो विभान्ति दीपकाः शोभन्ते ॥ १०२ ॥

अथातिशयलक्षणमाह । वस्तुन इति । वस्तुनो वर्ण्यपदार्थस्य उत्कर्षं वक्तुमाधिक्यमुत्पादयितुं यदसम्भाव्यमुच्यते तमतिशयख्यामलङ्कारं बुधा वदन्ति ॥ १०३ ॥

अथोदाहरणम् । त्वदिति । हे क्षितीश महोदधिषु महासमुद्रेषु मुररिपोः श्रीविष्णोर्निद्रा अपयाति । गच्छति । निद्राभङ्गो भवतीत्यर्थः। कैः कृत्वा अन्तराले मध्ये लुठन्तो गिरयः तेषां यः परस्परं शृङ्गसङ्गः शिखरास्फालनं तेन घोरा ये आरवाः शब्दास्तैः कृत्वा किंभूतेषु महोदधिषु त्वया दारिता हता येऽरयः शत्रवस्तेषां तरुण्यस्तासां श्वसितानिलेन श्वसितवायुना संमूर्छिता वर्द्धिता ऊर्मयः कल्लोला यत्र ते तथा तेषु। अत्र पूर्व नि-

एकदण्डानि सप्त स्युर्यदि छत्राणि पर्वते ॥
तदोपमीयते पार्श्वमूर्ध्नि सप्तफणः फणी ॥ १०५ ॥
यत्रोत्पादयतः किंचिदर्थं कर्तुः प्रकाश्यते ॥
तद्योग्यता युक्तिरसौ हेतुरुक्तो बुधैर्यथा ॥ १०६ ॥
जुव्वणसम उम्मत्तातत्ता विरहेण कुण इतीहस्स ॥
कंठब्भंतरघोलिद महुरसरं बालिआतीअम् ॥ १०७ ॥

श्वसितानिलैः समुद्रक्षोभोन सम्भवति कुतः तदन्तर्गतगिरिपरम्पराशिखरपरस्परास्फालनं कुतश्च विष्णोर्निद्राभङ्गः परं राज्ञः प्रतापाधिक्यं वर्णयितुमिदमुक्तम् ॥ १०४ ॥

एकेति । यदि पर्वते एकदण्डोपरि स्थितानि सप्तसंख्यानि छत्राण्यातपत्राणि तिर्यक् प्रसृतानि स्युः तदा पार्श्वनाथस्य मूर्ध्नि फणी सर्पः उपमीयते उपमानं प्राप्नोति । किंभूतः सप्त फणाः यस्य स तथा पार्श्वस्य पर्वतेन सहोपमानं सम्भवति श्यामवर्णत्वात् फणिनश्च एकदण्डेन सहोपमानं सम्भवति सप्तफणानां सप्तच्छत्रैः सहोपमानं। पर्वते एकदण्डोपवृत्तानि सप्तछत्राणि न सम्भवन्त्येव । अतः श्रीपार्श्वनाथस्य फणानानुपमा नास्ति अतिशयः प्रोक्त इति ॥ १०५ ॥

अथ हेतुलक्षणम् । यत्रेति । कर्तुः पुरुषस्य किंचिदर्थमुत्पादयतः यत्र योग्यतायुक्तिः तदेतत् योग्यं स्यादिति युक्तिसूक्तिस्तस्यार्थोत्पादनस्य योग्यतासामर्थ्यं तस्य युक्तिर्घटना तद्योग्यता युक्तिविशेषणैः कृत्वा प्रकाश्यते बुधैः स हेतुरलङ्कारः कथितः ॥ १०६ ॥

अथोदाहरणम् । जुव्वणेति । बालिका गीतं करोति गानं विदधाति । यौवनसमयोन्मत्ताहेतुगर्भितं विशेषणमाह । नाथ-

विससोयरो विअंको कअंत आसाइ आअदो पवणो ।
जाअपलासोसिहरी पहिये मारंति ते त्तिह्नि ॥ १०८

अतत्परतया यत्र कल्पमानेन वस्तुना ॥
विवक्षितं प्रतीयेत पर्यायोक्तिरियं यथा ॥ १०९ ॥

त्वत्सैन्यवाहनिवहस्य महाहवेषु
द्वेषः प्रभो रिपुपुरन्ध्रिजनस्य चासीत् ॥
एकः खुरैर्बहुलरेणुततिं चकार
तां संजहार पुनरश्रुजलैर्यदन्यः ॥ ११० ॥

स्य विरहेण स्वाभिनो वियोगेन तप्ता दुःखिता किंभूतं
कण्ठाभ्यन्तरघोलि(षि)तः करुणत्वेने आलपितः मधुरस्वरो
तत्तथा । एवंविधं गीतं गायन्तीभिः उन्मत्तविघूलितस्य योग्य
युक्तिः बालिकेतिमधुरस्वरस्य ॥ १०७ ॥

विससोयरो इति । ते त्रयोपि अधुना पथिकान्मारयान्
ते के एको मृगाङ्कः चन्द्रमाः किंभूतो विषसोदरो विषभ्रात
एकस्मादेव समुद्रादुत्पन्नत्वात् विषं हि मारयति तद्भ्रात
तथेति तदुक्तम् । द्वितीयः कृतान्ताशायाः दक्षिणदिशः स
शात् आगतः पवनो वायुः मलयानिलः अन्योपि कृतान्तव
शया अभिलाषेण मारणाभिप्रायेण आगतो भवति स मारय
तृतीयः शिखरी वृक्षः किंभूतः जातपलाशः सञ्जातपत्रः अ
पि जातपलाशो मारयति । जाता पलस्य मांसस्य आशा
स्येति स तथा ॥ १०८ ॥

अथ पर्यायोक्तिः । अतेति । यत्र अतत्परतया पदेन क
मानेनार्थेन विवक्षितं प्रतिपादयितुं ईप्सितं वस्तु प्रतीयेत ज्ञा
सा पर्यायोक्तिर्भवेत् ॥ १०९ ॥

कारणान्तरसंपत्तिर्दैवादारभ्य एव हि ॥
यत्र कार्यस्य जायेत तज्ज्ञायेत समाहितम् ॥ ११ ॥
मनस्विनी वल्लभवेश्म गन्तुमुत्कण्ठिता यावदभून्निशायाम् ॥
तावन्नवाम्भोधरधीरनादप्रबोधितः सौधशिखी चुकूज ॥१२॥

मेषु त्वत्सैन्याश्वसमूहस्य वैरिस्त्रीजनस्य च परस्परं द्वेष आसीत् । सैन्यवाहनिवहखुरैः रेणुततिं चकार । अन्योपि रिपुस्त्रीजनः तां ततिं सञ्जहार । कैः कृत्वा अश्रुजलैः । द्वेषस्येदं चिह्नम् । एकश्च कुरुते अन्यश्च संहरति । अत्र रिपवो मारिता इति विवक्षितम् । तथा अनेन अर्थेन प्रतीयते साक्षात्प्रतिपाद्यते न तत्परता । अत्र कल्पमानेन दोषेण राज्ञः पौरुषं प्रतीयते । पौरुषस्य तु साक्षादनुक्तत्वात् तत्परता ॥ १० ॥

अथ समाहितमाह ।कारणेति यत्र कार्यस्य आरम्भ एव दैवयोगाद्विधिवशात् कारणं कारणान्तरस्य कार्योत्पादनस्य हेत्वन्तरस्य संपत्तिर्व्याप्तिर्जायते । तत्समाहितं नामालंकारः ॥ ११ ॥

अथोदाहरणं । मनस्विनी मानिनी यावन्निशायां रात्रौ वल्लभवेश्म प्राणप्रियगृहं गतुमुत्कण्ठिता उत्सुका अभूत् संजाता तस्मिन्नेव काले सौधशिखी गृहाङ्गणमयूरश्चुकूज । शब्दं चकार । किंभूतो मयूरः नवस्य अम्भोधरस्य यो धीरो मन्दो नादो गर्जनं तेन प्रबोधितो जागरितः । एतावता न स्थिता कामपरवशत्वेन मानमपहाय भर्तृगेहे गमनकार्यं प्रारब्धं तावद्दैवान्मेघो जातः। ततश्च सौधशिखी चुकूज इति हेत्वन्तराभ्यां अत्यन्तसत्वरगमनेन उत्कण्ठिता जातेति भावः । उत्कण्ठात्वं हि कार्यं शिखिकूजनं कारणम् ॥ १२ ॥

परिवर्तनमर्द्धेन सदृशासदृशेन वा ॥
जायेतेऽर्थस्य यत्रासौ परिवृत्तिर्यथा मता ॥१३॥

अन्तर्गतव्यालफणामणीनां प्रभाभिरुद्भासितभूषु भर्तः ॥
स्फुरत्प्रदीपानि गृहाणि मुक्त्वा गुहासु शेते त्वदरातिवर्गः १४

दत्त्वा प्रहारं रिपुपार्थिवानां जग्राह यः संयति जीवितव्यम् ॥
शृङ्गारभृङ्गीं च तदङ्गनानामादाय दुःखानि ददौ सदैव॥१५॥

यत्रोक्तानां पदार्थानामर्थाः संबन्धिनः पुनः ॥
क्रमेण तेन बध्यन्ते तद्यथासंख्यमुच्यते ॥१६॥

अथ परिवृत्तिलक्षणमाह । परिवर्तनमिति । अस्मिन्नलंकारे सदृशासदृशेन तुल्यातुल्येनार्धेन सह परिवर्तनम् परावर्तो जायते । असौ परिवृत्तिर्मता ॥ १३ ॥

अथ सदृशोदाहरणं यथा । अंतर्गन्तेति । हे [illegible] स्वामिन् हे राजेन्द्र त्वदरातिवर्गः तव वैरिसमूहः गुहासु कन्दरासु शेते स्वपिति । किं कृत्वा गृहाणि मुक्त्वा सदनानि विहाय । कीदृशानि स्फुरत्प्रदीपानि । किंभूतासु गुहासु अन्तर्गतः मध्यवर्ती दुष्टसर्पफणरत्नानां प्रभाभिः कान्तिभिरुद्भासिता दीपिता भूः पृथ्वी यासां तास्तथा तासु । प्रदीपस्थाने फणामणयः गृहस्थाने गुहाः प्रदीपयुक्तगृहेण सदृशफणामणिदीपितगुहालक्षणार्धस्य परिवर्तनग्रहणात् सदृशपरिवृत्तिः ॥ १४ ॥

अथासदृशोदाहरणं । दत्त्वेति । यो राजा संयति संग्रामे प्रहारं दत्त्वा रिपुपार्थिवानां जीवितव्यं जग्राह गृहीतवान् च पुनः वैरिस्त्रीणां शृङ्गारभृङ्गीमलकारपरम्परां गृहीत्वा दुःखानि ददौ । अत्र प्रहारसदृशो न जीवितव्यं न शृङ्गारभृङ्गीसदृशानि दुःखानि अतोऽसदृशपरिवृत्तिः ॥ १५ ॥

यत्रेति । यत्र ये उक्तानां निबद्धानां पदार्थानां संबन्धिनोऽर्थाः

मृदुभुजलतिकाभ्यां शोणिमानं दधत्या
चरणकमलभासा चारुणा चाननेन ॥
बिसकिसलयपद्मान्यात्तलक्ष्मीणि मन्ये
विरहविपदि वैरात्तन्वते तापमङ्गे ॥ १७ ॥
वस्तुनोर्यत्र संबन्धमनौचित्येन केनचित् ॥
असंभाव्यं वदेद्वक्ता तमाहुर्विषमं यथा ॥ १८ ॥
क्वेदं तव वपुर्वत्से कदलीगर्भकोमलम् ॥
क्वायं राजीमति क्लेशदायी व्रतपरिग्रहः ॥ १९ ॥

पुनः तेनैव क्रमेण बध्यन्ते । तद्यथासंख्यं कथ्यते ॥ १६ ॥

अस्योदाहरणं यथा । मृद्विति । अहमेवं मन्ये बिसानि मृणालानि किसलयानि पल्लवानि पद्मानि कमलानि एतानि त्रीण्यपि विरहविपदि वियोगे वैरात् अङ्गे शरीरे तापं तन्वते विस्तारयन्ति । मृद्विति वैरे हेतुगर्भितं विशेषणमाह । आत्तलक्ष्मीणि गृहीतशोभानि अन्योपि यो बलात् गृहीतलक्ष्मीको भवति । स वैरं वहति आपादि पतितायां च संतापं करोति । कैः आत्तलक्ष्मीणि मृदुभुजलतिकाभ्यां मृणालानि आत्तलक्ष्मीणि कृतानि । एवं पदकमलकान्त्या शोणिमानं रक्तिमानं धरन्त्या किसलया आत्तलक्ष्मीकाः कृताः प्रधानेन चाननेन पद्मानि गृहीतशोभानि कृतानि ॥ १७ ॥

अथ विषमलक्षणमाह । वस्त्विति यत्र द्वयोर्वस्तुनोः केनापि अनौचित्येन अयोग्यत्वेन संबन्धमसंभाव्यं वदेत् तं विषममाहुः ॥ १८ ॥

अथोदाहरणम् । क्वेदमिति । उग्रसेननृपो राजीमतीं व्रतग्रहणोद्यतामित्याह । हे वत्से राजीमति इदं तव वपुः क्व किंभूतं । कदलीगर्भवत् सुकोमलमयं व्रतपरिग्रहचारित्राङ्गीकारः क्व किंभूतः ।

सहोक्तिः सा भवेद्यत्र कार्यकारणयोः सह ॥
समुत्पत्तिः कथाहेतोर्वक्तुं तज्जन्मशाक्तिताम् ॥ २० ॥
आदत्ते सह यशसा नमयति सार्द्धं मदेन संग्रामे ॥
सह विद्विषां श्रियासौ कोदण्डं कर्षति श्रीमान् ॥ २१ ॥
आपाते हि विरुद्धत्वं यत्र वाक्येन तत्त्वतः ॥
शब्दार्थकृतमाभाति स विरोधः स्मृतो यथा ॥ २२ ॥

क्लेशदायी अत्र शरीरस्यातिसुकुमारत्वं न व्रतस्यात्यन्तक्लेशदायित्वेन संबन्धो न भवतीति भावः ॥ १९ ॥

अथ सहोक्तिलक्षणमाह । सहोक्तिरिति । यत्र कार्यकारणयोः सह समकालमेव समुत्पत्तिः कथ्यते किमर्थं कथाहेतोः कथानायकस्य वर्ण्यस्य राजादेः तयोः कार्यकारणयोर्जन्म उत्पत्तिस्तत्र शक्तिर्यस्य स तज्जन्मशक्तिः तस्य भावः तत्ता तां वक्तुं कथानायक एव समर्थः सन् समकालमेव कार्यं कारणं च उत्पादयतीति वक्तुमित्यर्थः सा सहोक्तिर्भवेत् ॥ २० ॥

अथोदाहरणं । आदत्ते इति । असौ श्रीमान् राजा विद्विषां यशसा सह कोदण्डम् धनुरादत्ते । संग्रामे विद्विषां मदेन अहङ्कारेण सह कोदण्डं नमयति । विद्विषां श्रिया सह कोदण्डं कर्षति । अत्र वैरिणां यशोग्रहणं कार्यं स्वधनुष्कग्रहणं करणम् । यतो धनुष्कं गृहीत्वा निर्जितेषु वैरिषु यशः स्वस्मिन्नागच्छति । वैरिणामहङ्कारनमनं कार्यं कोदण्डनामनं च कारणं एवं द्विविषां श्रिय आकर्षणं कार्यं कोदण्डाकर्षणं च कारणम् । अत्र राज्ञः पौरुषाधिक्यवर्णनाय झटिति करणेन कार्यकारणेन कार्यकारणयोः सहभाव उक्तः ॥ २१ ॥

अथ विरोधलक्षणमाह । आपातेति । यत्र वाक्ये आपाते पतनमात्रे प्रतिपादनकाले विरुद्धत्वमाभाति परं न तत्त्वतः पर-

दुर्वारबाणविभवेन सुवर्मणापि
लोकोत्तरान्वयभुवापि च धीवरेण ॥
प्रत्यर्थिषु प्रतिरणं स्खलितेषु तेन
संज्ञामवाप्य युयुधे पुनरेव विष्णुः ॥ २३ ॥
येनाक्रान्ते सिंहासनमरिभूभृच्छिरांसि विनतानि ॥
क्षिप्ता युधि शरपङ्क्तिः कीर्तिर्याता दिगन्तेषु ॥ २४ ॥

मार्थतः किं तद्विरुद्धत्वं शब्दार्थकृतं च सह विरोधः स्मृतः ॥२२॥

अथ शब्दकृतविरोधे उदाहरणमाह। दुर्वारेति। जरासन्धेन राज्ञा जराविद्यया यादवसैन्ये अचैतन्ये कृते सति क्षणान्तरे विष्णुः श्रीनारायणः संज्ञां चैतन्यम् अवाप्य पुनरेव युयुधे संग्रामं चकार। क सति तेन नेमिना रणं प्रति रणं प्रत्यर्थिषु वैरिषु जरासन्धपक्षिषु स्खलितेषु सत्सु औद्धत्यभावं त्याजितेषु सत्सु त्रासितेषु दयार्द्रत्वेन न मारितेषु नेमिना किंभूतेन श्रीनेमिनाथेन दुर्वारबाणविभवेन दुर्वारो वारयितुमशक्यो बाणविभवः शरप्रपञ्चो यस्य स तथा तेन।'जगरः कवचं दंशो वारबाणस्तु कञ्चुक'इति वचनाद्वारबाणः सन्नाह उच्यते। दुष्टो वारबाणस्य सन्नाहस्य विभवो यस्य सः। कथं सुवर्मा शोभनसन्नाहः स्यात् न इति शब्दविरोधः। अथ च विरोधपरिहारे दुर्वारो दुःखेन वारयितुं शक्यो बाणविभवो यस्य स तथा तेन लोकोत्तरप्रधाने यदुवंशे भूरुत्पत्तिर्यस्य स तथा तेन यः किल उत्तमवंशोद्भवः स कथं धीवरो मत्स्यबन्धक इति विरोधः। अथ च तत्परिहारे धीवरेण बुद्धिश्रेष्ठेन ॥ २३ ॥

अथार्थकृतविरोधे उदाहरणम्। येनेति येन राज्ञा सिंहासनमाक्रान्तं वैरिराज्ञां मस्तकानि विनतानि विनम्रीकृतानि यत्किल आक्रम्यते तन्नमति। अत्र च अन्यदाक्रान्तं अन्यन्न-

यत्रार्थान्तरमुत्कृष्टं संभवत्युपलक्षणम् ॥
प्रस्तुतार्थस्य स प्रोक्तो बुधैरवसरो यथा ॥ २५ ॥

स एष निश्चितानन्दः स्वच्छन्दतमविक्रमः ॥
येन नक्तंचरः सोपि युद्धे बर्बरको जितः ॥ २६ ॥

यत्र निर्द्धारितात्सारात्सारं सारं ततस्ततः ॥
निर्द्धार्यते यथाशक्ति तत्सारमिति कथ्यते ॥२७॥

मितमित्यर्थकृतो विरोधाभासः। यथा येन राज्ञा युधि सङ्ग्रामे शरपङ्क्तिः क्षिता दिगन्तेषु कीर्तिर्याता गता यत् क्षिप्यते तद्दूरे याति अत्र च न तथा ॥ २४ ॥

अथावसरलक्षणमाह । यत्रेति । यत्र प्रस्तुतार्थस्य उत्कृष्टं प्रसिद्धं अर्थान्तरलक्षणं सम्भवति स बुधैरवसरः प्रोक्तः ॥२५॥

अथोदाहरणम् । स एष इति । स एष राजा वर्तते अर्थाज्जयसिंहदेवः । कीदृशो राजा निश्चयानन्दः निश्चयेन सार्वदिकेन आनन्द एव हर्ष एव यस्य स तथा । न कदाचित्पराजयादिप्रपञ्चेन विज्ञातः । स्वच्छन्दतमः स्वाधीनतमो विक्रमो बलं यस्य स तथा । जयलक्षणमाह । येनानेन राज्ञा सोपि प्रसिद्धो बर्बरो नाम नक्तञ्चरो राक्षसरूपो राज्ञा युद्धे सङ्ग्रामे जितः पराभूतः । अत्र जयसिंहदेवोऽर्थादेव प्रसिद्धस्य बर्बरकस्य राज्ञो जयकारित्वेन उपलक्षणेन ज्ञायते इत्यवसरोयम् ॥ २६ ॥

अथ सारलक्षणमाह । यत्रेति । यत्र निर्द्धारितात्सामान्यवस्तुनः पृथक् कृतात्सारात् प्रधानात् वस्तुनः सारं निर्द्धार्यते पृथक् क्रियते तत्सारं ततस्तदनन्तरम् । पुनः यथाशक्ति आत्मशक्त्यनुसारेण सारवस्तु निर्द्धार्यते एतत्सारमिति सारनामालङ्कारः कथ्यते ॥ २७ ॥

संसारे मानुष्यं सारं मानुष्यके तु कौलीनम् ॥
कौलीने धर्मित्वं धर्मित्वे चापि सदयत्वम् ॥ २८ ॥
पदैस्तैरेव भिन्नैर्वा वाक्यं वक्त्येकमेव हि ॥
अनेकमर्थं यत्रासौ श्लेष इत्युच्यते यथा ॥ २९ ॥
आनन्दमुल्लासयतः समन्तात् करैरसंतापकरैः प्रजानाम् ॥
यस्योदये क्षोभमवाप्य राज्ञो जग्राह वेलां किलसिन्धुनाथः ३०
कुर्वन् कुवलयोल्लासं रम्याम्भोजश्रियं हरन् ॥
रेजे राजापि तच्चित्रं निशान्ते कान्तिमत्तया॥३१ ॥

अत्रोदाहरणम् । संसार इति । सुगमम् ॥ २८ ॥

अथ श्लेषलक्षणमाह । पदैरिति । यत्रालङ्कारे एकमेव वाक्यं तैरेव पदैर्वा भिन्नैः पदैः अनेकमर्थं नानाविधं वाक्यं वक्ति असौ श्लेषनामालङ्कारः ॥ २९ ॥

तैरैव पदैः श्लेषोदाहरणम् । आनन्दमिति । यस्य राज्ञो जयसिंहस्य उदये क्षोभमवाप्य सिन्धुनाथः सिन्धुदेशस्वामी किलेति सत्ये वेलां जग्राह कालमतिवाहितवान् । किंभूतस्य प्रजानां समन्तादानन्दं उल्लासयतः । कैः कृत्वा करैः दण्डैः । किंविशिष्टैः सन्तापं दुःखं कुर्वन्तीति सन्तापकारास्तथा न भवन्तीति तैः अथ च अन्योपि सिंधुनाथः समुद्रः । राज्ञः चन्द्रस्य उदये क्षोभं उत्कल्लोलत्वं वेलां गृह्णाति तटभूमिकां प्राप्नोति । किंभूतस्य प्रजानां लोकानां करैः किरणैः कृत्वानन्दं उल्लासयतः किंकरैः असन्तापकरैः ॥ ३० ॥

अथ भिन्नपदैः श्लेषोदाहरणम् । कुर्वन्निति । यो जयसिंहराजापि निशान्ते अन्तःपुरे कान्तिमत्तया कृत्वा रेजे । कुवलयस्य पृथ्वीवलयस्य उल्लासं कुर्वन् रम्यां प्रधानां भोजराजस्य

एकत्र यत्र वस्तूनामनेकेषां निबन्धनम् ॥
अत्युत्कृष्टमकृष्टानां तं वदन्ति समुच्चयम् ॥ ३२ ॥
अणहिल्लपाटलं पुरमवनिपतिः कर्णदेवनृपसूनुः ॥
श्रीकलशनामधेयः करी च जगतीह रत्नानि ॥३३॥
ग्रामे वासो नायको निर्विवेकः कौटिल्यानामेकपात्रं कलत्रम् ॥
नित्यं रोगः पारवश्यं च पुंसामेतत्सर्वं जीवतामेव,मृत्युः॥३४॥
प्रशंसा क्रियते यत्राप्रस्तुतस्यापि वस्तुनः ॥
अप्रस्तुतप्रशंसां तामाहुः कृतधियो यथा ॥ ३५ ॥

श्रियं लक्ष्मीं हरन् । अन्योपि राजा चन्द्रः । स निशान्ते प्रभाते कान्तिमत्तया कृत्वा राजते कुवलयस्य विकासं कुर्वन् । रम्याम्भोजानि मनोहरसूर्यविकासिकमलानि तच्छ्रियं हरन् । अत्र कुः पृथ्वीति भिन्नं अम्भोजश्रीरिति च भिन्नम् ॥ ३१ ॥

अथ समुच्चयलक्षणमाह । एकत्रेति । यत्र एकत्र वर्ण्यत्वेनैषां वस्तूनां निबन्धनं भवति । तं समुच्चयमलङ्कारं बुधा वदन्ति । कीदृशानां वस्तूनां अत्युत्कृष्टानामतीवप्रधानानां अपकृष्टानां नीचानाम् ॥ ३२ ॥

अणहिल्लेति । इह जगति त्रीणि रत्नानि वर्तन्ते । तानि कानीत्यत आह । एकमणहिल्लपत्तनं तन्नामकं नगरं द्वितीयोऽवनिपतिः श्रीकर्णदेवनृपसूनुर्जयसिंहदेवः तृतीयः श्रीकलशनामधेयो हस्ती । अत्रोत्कृष्टानां वस्तूनां निबन्धनं ज्ञेयम्॥३३॥

अपकृष्टानां वस्तूनां निबन्धनं दर्शयति । ग्रामेति । सुगममेतत् ॥ ३४ ॥

अथाप्रस्तुतप्रशंसालक्षणमाह । प्रशंसेति । यत्राप्रस्तुतस्यापि अश्लाघ्यस्य वस्तुनः प्रशंसा श्लाघावर्णनं क्रियते तामप्रस्तुतप्रशंसां नामालङ्कारं कृतधियः पण्डिता आहुः ॥ ३५ ॥

स्वैरं विहरति स्वैरं शेते स्वैरं च जल्पति ॥
भिक्षुरेकः सुखी लोके राजचोरभयोज्झितः ॥ ३६
पूर्वपूर्वार्धवैशिष्ट्यनिष्ठानामुत्तरोत्तरम् ॥
अर्थानां या विरचना बुधैरेकावली मता ॥ ३७ ॥
देशः समृद्धनगरो नगराणि च सप्तभूमिनिलयानि ॥
निलयाः सलीललालनाललनाश्चात्यन्तकमनीयाः ॥ ३८ ॥

प्रत्यक्षाल्लिङ्गतो यत्र कालत्रितयवर्तिनः ॥
लिङ्गिनो भवति ज्ञानमनुमानं तदुच्यते ॥ ३९ ॥
नूनं नद्यस्तदाभूवन्नभिषेकाम्भसा प्रभो ॥
अन्यथा कथमेतासु जनः स्नानेन शुध्यति ॥ ४० ॥
जम्भजित्ककुभि ज्योतिर्यथा शुभ्रं विजृम्भते ॥
उदेष्यति तथा मन्ये खलः सखि निशाकरः ॥४१॥

अथोदाहरणमाह । स्वैरं विहरतीति । सुगममेतत्पद्यम् ३६

अथैकावलीलक्षणमाह । पूर्वपूर्वार्धवैशिष्ट्यमिति । पूर्वपूर्वार्धवैशिष्ट्यनिष्ठानामर्थानामुत्तरोत्तरं या विरचना सा बुधैरेकावली मता कथिता एकावल्यलङ्कारः ॥ ३७ ॥

अथोदाहरणम् । देश इति । सुगममेतत्पद्यम् ॥ ३८ ॥

अथाऽनुमानलक्षणमाह । प्रत्यक्षादिति । यत्रालङ्कारे प्रत्यक्षाल्लिङ्गतः चिह्नतः कालत्रितयवर्तिनोतीतानामतवर्तमानस्य लिङ्गिनः अनुमेयस्य ज्ञानं भवति तदनुमानमुच्यते ॥ ३९ ॥

अथोदाहरणम् । नूनमिति । नूनं निश्चितं नद्यस्तदा तस्मिन्प्रस्तावे जन्मस्नानकाले विभोर्नेमेः अभिषेकाम्भसा अभूवन् । अन्यथा एतासु नदीषु जनो लोकः स्नानेन कथं शुध्यति ॥ ४० ॥

अथानागतोदाहरणम् । जम्भजिदिति । हे सखि अहं मन्ये जम्भजित्ककुभि पूर्वस्यां दिशि शुभ्रं ज्योतिस्तथा विजृम्भते

मुखप्रभाबाधितकान्तिरस्या
दोषाकरः किङ्करतां बिभर्ति ॥
तल्लोचनश्रीहृतिसापराधा-
न्यब्जानि नोचेत्किमयं क्षिणोति ॥ ४२ ॥

यत्र साधारणं किंचिदेकत्र प्रतिपाद्यते ॥
अन्यत्र तन्निवृत्त्यै सा परिसंख्योच्यते बुधैः॥ ४३॥

यत्र वायुः परं चोरः पौरसौरभसम्पदाम् ॥
युवानो यत्र राजन्त एक ( निक्षिप्त ) भीतयः(?)॥४४॥
प्रश्ने यत्रोत्तरं व्यक्तं गूढं वाप्यथवोभयम् ॥
प्रश्नोत्तरं तथोक्तानां संसर्गं संकरं विदुः ॥ ४५ ॥

तथा प्रकटीभवति । यथा खलो दुर्जनः सन्तापकारित्वात् निशाकरश्चन्द्रमा उदेष्यति ॥ ४१ ॥

अथ वर्तमानकालोदाहरणम् । मुखमिति । दोषाकरश्चन्द्रमा अस्याःस्त्रियो मुखस्य किङ्करतां दासतां बिभर्ति धरति। किंभूतश्चन्द्रमाः मुखप्रभया वदनकान्त्या बाधिता गृहीता कान्तिर्यस्यासौ। तथा चेद्यदि एवं न स्यात्तर्हि अयं चन्द्रमा अब्जानि किं क्षिणोति किं पीडयति । हेतुगर्भितं विशेषणमाह । यतः कीदृशान्यब्जानि तस्या नायिकाया लोचनयोः श्रियः शोभायाः हृतिः हरणं तेन सापराधानि यः किल मेचको भवति स तस्य शत्रुं पीडयति ॥ ४२ ॥

परिसंख्यालक्षणमाह । यत्रेति । यत्रालङ्कारे किंचित्साधारणम् एकत्र प्रतिपाद्यते कथ्यते अन्यत्र स्थाने तन्निवृत्त्यै सा परिसंख्योच्यते यथा ॥ ४३ ॥

अथोदाहरणम् । यत्रेति । यत्र नगरे परं केवलं वायुश्चोरो वर्तते केषां चोरः । पौरसौरभसम्पदां पुरस्येदं पौरं । तस्येदमणो वृद्धिः । पौरं च तत् सौरभं तस्य सम्पदस्तासाम् । एतावता तत्र नगराश्रियश्चोरः कोपि नास्ति । यत्र युवानो यौवनस्थाः एकत्रानिवे-

अस्मिन्नपारसंसारसागरे मज्जतां सताम् ॥
किं समालम्बनं साधो रागद्वेषपरिक्षयः ॥ ४६ ॥
क्व वसन्ति श्रियो नित्यं भूभृतां वद कोविद ॥
असावतिशयः कोपि यदुक्तमपि नोह्यते ॥ ४७ ॥
किमैभं श्लाघ्यमाख्याति पक्षिणं कः कुतो यशः ॥
गरुडः कीदृशो नित्यं दानवारिविराजितः ॥ ४८ ॥

बह्मण्डसुत्तिसंपुडमोत्तिअमणिणा प्पहासमूह व्व ॥
सिरिबाहड त्ति तणओ आसि बुहो तस्स सोमस्स ॥४९॥

शितं भीतत्वं सर्वत्र साधारणं परम् अन्यत्र तन्निवृत्तेः ॥ ४४ ॥

अथ प्रश्नोत्तरसङ्करलक्षणमाह। प्रश्ने इति। यत्र प्रश्ने उत्तरं व्यक्तं वा गूढम् अप्रकटं तत्र प्रश्नोत्तरमलङ्कारं विदुः। पूर्वप्रतिपादितानामलंकाराणां संसर्गमेकत्र मिलनं तत्र सङ्करालङ्कारमाह ॥ ४५ ॥

अथोदाहरणत्रयं क्रमेण दर्शयति। अस्मिन् इति। अस्मिन्नपारे संसारसमुद्रे मज्जतां मग्नानां किं समालम्बनं व्यक्तमुत्तरं रागद्वेषपरिक्षयः रागद्वेषदोषाभावः ॥ ४६ ॥

क्वेति। हे कोविद विद्वद्वर वद कथय भूभृतां राज्ञां श्रियो लक्ष्म्यः क्व वसन्ति असौ कोप्यतिशयः यत उक्तमपि नोह्यते न ज्ञायते अत्र गूढं उत्तरम् असौ खड्गे वसन्तीति ॥ ४७ ॥

किमैभमिति। ऐभं हस्तिसंबन्धि श्लाघ्यं किं आख्याति। उत्तरं गूढं दानवारि मदजलम्। पक्षिणं कः शब्दः आख्याति उत्तरं गूढं विः पक्षी। यशः कुतो भवति उत्तरं गूढं आजितः संग्रामात्। गरुडः कीदृशः सर्वदा शोभते उत्तरं व्यक्तं दानवारिविराजितः श्री विष्णुना विराजितः ॥ ४८ ॥

अचमत्कारिता वा स्यादुक्तान्तर्भाव एव वा ॥
अलंक्रियाणामन्यासामनिबन्धनिबन्धनम् ॥ ५० ॥
द्वे एव रीती गौडीया वैदर्भी चेति सान्तरे ॥
एका भूयः समासा स्यादसमस्तपदापरा ॥ ५१ ॥
दर्पोत्पाटिततुङ्गपर्वतशतग्रावप्रतापाहति-
क्रूराक्रन्ददतुच्छकच्छपकुलक्रेङ्कारघोरीकृतः ॥
विश्वं बर्बरबध्यमानपयसः सिप्रापगायाः स्फुर-
न्नाक्रामत्ययमक्रमेण बहुलः कल्लोलकोलाहलः ॥ ५२ ॥

अथ सङ्करोदाहरणम् । ब्रह्माण्डेति । तस्य सोमस्य बाहड-नामा तनय आसीत् । कीदृशस्य सा ब्रह्माण्डशुक्तिमौक्तिकमणेः क इव बाहडतनयः प्रभासमूह इव । किंभूतः सः बुधो वि-द्वान् । एतेनालङ्कारेण स्वनामसहितं सङ्करालङ्कारस्योदाहरणं भणितम् । ब्रह्माण्डेत्यादिपदे रूपकं प्रभासमूहे इवेति उत्प्रेक्षा युक्तोयमर्थस्तस्य सोमस्य चन्द्रस्य बुधस्तनय इति श्लेषः । बा-हड इति शेषं जातिः । इति चतुर्णां योगे सङ्करः ॥ ४९ ॥

अचमत्कारितेति । अन्यासां अलंक्रियाणां अनिबन्धे अभ-णने निबन्धनं कारणम् अचमत्कारिता स्यात् । अथ वा तासां उक्तान्तर्भाव एव अनुक्तानामिति शेषः । यथा समासोक्तौ अ-न्योक्तेरन्तर्भावः उक्तेभ्योन्येषामलङ्काराणां चमत्कारिताभावा-दनिबन्ध एव श्रेयान् । यतः सौन्दर्ये अलङ्कार एव कार-णम् ॥ ५० ॥

द्वे एवेति । सान्तरे द्वे एव रीती वर्तेते गौडीया वैदर्भी चेति । यतस्ते सान्तरे अन्तरसहिते सविशेषे पृथक्लक्षणैर्दर्शयति । गौडीया रीतिः बहुसमासा स्यात् । अपरा वैदर्भीया रीतिः असमस्तपदा असमासा स्यात् ॥ ५१ ॥

विप्राः प्रकृत्यैव भवन्ति लोला
लोकोक्तिरेषा न मृषा कदाचित् ॥
यच्चुम्ब्यमानां मधुपैर्द्विजेशः
श्लिष्यत्यसौ कैरविणीं कराग्रैः ॥ ९३ ॥

अर्थेन येनातिचमत्करोति प्रायः कवित्वं कृतिनां मनःसु ॥

अथ गौडीयोदाहरणमाह । दर्पेति । सिप्रापगायाः सिप्राख्यनद्याः अयं कल्लोलकोलाहलः अक्रमेण समकालं विश्वं आक्रमति । किंभूतः दर्पेणोत्पाटितं यत्तुङ्गपर्वतशतं तस्य ये ग्रावाणः पाषाणास्तेषां प्रतापस्तस्याहत्या आघातेन क्रूराक्रन्दन्तो ये अतुच्छा बहवः कच्छपास्तेषां कुलानि तेषां क्रेङ्कारैः शब्दविशेषैः घोरीकृतः रौद्रीकृतः । कथम्भूतायाः सिप्रायाः बर्बरदैत्येन बध्यमानं यत्पयः जलं यस्याः सा तथा तस्याः । कल्लोलकोलाहलः किंविशिष्टः स्फुरन् । पुनः किंभूतः बहुलः सान्द्रः । दर्पोत्पाटितेति गौडीया विश्वमिति वैदर्भी चेदं कवेर्दूषणम् ॥ ९२ ॥

अथ वैदर्भ्या उदाहरणम् । विप्राः प्रकृत्येति । लोकोक्तिरेषा कदाचित् मृषा न भवति । एषा का । विप्राः प्रकृत्यैव स्वभावेनैव लोलाश्चपला भवन्ति यस्मात् कारणात् । द्विजेशश्चन्द्रमाः कैरविणीं कुमुदिनीं स्त्रियं कराग्रैः किरणैः श्लिष्यति स्पृशति । किंभूतां कैरविणीं मधुपैः भ्रमरैः चुम्ब्यमानाम् । लोलत्वपक्षे द्विजेशो ब्राह्मणेन्द्रः मधुपैर्मद्यपैश्च चुम्ब्यमानां स्त्रियं कराग्रैः हस्ताग्रैः श्लिष्यति स्पृशति ॥ ९३ ॥

ननु भोः शास्त्रान्तरेषु अलङ्कारबाहुल्ये अर्थविशेषेण चम-

अलंक्रियात्वेन स एव तस्मिन्ननूह्यतां हन्त दिशान

इति वाग्भटालंकारे चतुर्थः परिच्छेदः सं

—०:०—

साधुपाकेप्यनास्वाद्यं भोज्यं निर्लवणं यथा

तथैव नीरसं काव्यमिति ब्रूमो रसानिह ॥

त्कारकारित्वं च प्रतीयते अतः कथमेतावन्त एवाल

त्याशङ्क्योत्तरमाह । अर्थेनेति । येनार्थेन काव्यं

ण्डितानां मनःसु अतिचमत्कारोति अत्यन्तं चमत्क

भवति स एवार्थः तस्मिन् काव्ये हन्तेति हर्षे अनयै

अनेनैव मदुक्तप्रकारेण अलङ्कारत्वेन ऊह्यतां ज्ञायतां

यत्र काव्ये योर्थः आश्चर्यकारी स एवात्र अ

ज्ञेयः ॥ १२ ॥

इति वाग्भटालंकारे टीकायां चतुर्थः परिच्छेदः

—०:०—

अथ रसान् व्याचिख्यासुराह । साध्विति । यथ

शालिदालिकाप्रभृतिसाधुपाकेपि कृते सूपकारेण निष्प

तेपि निर्लवणं सत् अनास्वाद्यं न चतुरचेतांसि चमत्करो

इतिहेतोः कवयः मन्त्रिवाग्भटलक्षणाः वदन्ति ।

निह शास्त्रे ब्रूमो वदामः ॥ त्रैलोक्यव्यापि रसविस्त

कथमवतारयिष्यतीत्याशङ्क्या मतिमतां अवज्ञा मा भूत्

त्मनो व्याससमाससामर्थ्यज्ञापनाय वयमिति बहुवचन

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ॥
आरोप्यमाणमुत्कर्षं स्थायीभावः स्मृतो रसः ॥ २ ॥

ति चित्रं विभावादिभिः प्रकटीकृत्य रसतां प्रापितः सन्निति भावः । स च प्रतिप्राणि नवधा स्यात् । तथा हि । रतिः १ उत्साहः २ शोकः ३ हास्यं ४ विस्मयः ५ भयं ६ द्वेषः ७ जुगुप्सा ८ उपशमः ९ इति । यतः सर्वो जीवः सुखसक्तो रिरंसते १ स्वहिताय उत्साहे २ स्वमहत्वक्षातिशङ्कया शोचने ३ हसति ४ स्वपरकृत्यवैचित्र्यदर्शनात् विस्मयते ५ बिभेति ६ परस्मै कुप्यति ७ परं जुगुप्सते ८ वैराग्येण किञ्चित् त्यक्तुकामः सन् प्रसन्नं भजते ९ । इति नवभिश्चित्तव्यापारैः शून्यः-कश्चित्कदाचित् स्यात् मुक्तावस्थाया अर्वाक् केवलं न कस्यचिदन्यथाभित्त(?) द्विशेषेणोत्तममध्यमाधमभावाः प्राणिनां स्युः । विशेषेण भावयन्तीति विभावाः पालनोद्यादिना अनुकूलं भावयन्तीत्यनुभावाः कटाक्षभुजाक्षेपादयः । तैरुभयेप्यमेथाः । स्वप्ने शरीरे भवन्ती ते सात्विकाः ते चाष्टौ यथा स्तम्भनम् १ स्वेदः २ पुलकः ३ स्वरभेदः ४ मुक्तावस्थायाः स्वराव्यग्रता स्वरकम्पः ५ वैवर्ण्यं ६ अश्रु ७ मूर्छा ८ इति । धृतिः सन्तोषः १ स्मृतिः स्मरणं २ मतिः अर्थनिर्णयः ३ व्रीडा मनःसङ्कोचः ४ जडतार्थाप्रतिपत्तिः ५ विषादश्चित्तपीडा ६ मदः प्रीतिसंमोहसम्भेदः ७ व्याधिर्मनस्तापः ८ निद्रा मनःसंमीलनम् ९ सुप्तं निद्रागाढावस्था १० औत्सुक्यं विलम्बाक्षमत्वम् ११ अवहित्थमाकारगोपनम् १२ शङ्काऽनिष्टविचारणा १३ चापल्यं चेतोनवस्था १४ । आलस्यं कार्येष्वनादरः १५ हर्षश्चित्तप्रसत्तिः १६ गर्वः परावज्ञा-१७ उग्रता चण्डता १८ प्रबोधो विनिद्रता १९ ग्लानिर्बलापचयः २० दैन्यं कार्पण्यम् २१ श्रमः स्वेदः २२ उन्मादो

मनोविप्लवः २३ मोहो मूढता २४ चिन्ता ध्यानं २५ अमर्षः प्रतिकर्तुमिच्छा २६ त्रासः चित्तचमत्कृतिः २७ अपस्मारः आवेशः २८ निर्वेदः स्वावज्ञा २९ आवेगः संभ्रमः ३० वितर्कः सम्भावना ३१ असूयाऽक्षमा ३२ मरणं म्रीयमाणता ३३ एते मानसास्त्रयस्त्रिंशदेव नत्वधिकाः। तेनान्ये अत्रैवान्तर्भाव्याः यथा। दम्भो अवत्थ उद्वेगो निर्वेदो क्षुत् तृषा ग्लानिः अमी व्यभिचरन्तीति व्यभिचारिणः कदाचिद्भवन्ति कदाचिदत्र जाता अपि स्वहेतुक्षये क्षीयन्ते ज्ञाततत्त्वस्य च न भवन्ति तथा मणिमन्त्रौषधियुक्तस्य चिद्ग्लानालस्यश्रमप्रमुखा जन्ममध्ये न भवन्त्येव। रत्यादयस्तु कृतस्वकर्तव्यतया प्रलीनकल्पा अपि संस्कारशेषतां न त्यजन्ति वस्तुविषये तेषामुच्छेदेपि वस्त्वन्तरविषयेनुच्छेदादतस्मात्ते स्थायिनस्तथा ग्लानोयमित्युक्ते कुत इति हेतुप्रश्नः। तेन ग्लान्यादीनां व्यभिचारित्वं राम उत्साहशक्तिमानित्युक्ते कुत इति हेतुप्रश्नो न स्यात् अत उत्साहादीनां स्थायित्वम्। तथा च सति काव्यनाव्यशास्त्रप्रसिद्धैर्विभावैः कारणैरनुभावैः कार्यैर्व्यभिचारिभिः सहचारिचारिभिश्चोत्कर्षं प्राकव्यमारोप्यमाणो नीयमानो रत्यादिस्थायिशृङ्गारादिरसः स्मृतः कथितः। कोयं। रसस्य रत्यादिस्थायिन उपादाकारणानि यथा पटस्य तन्तवः न च समवायिकारणं द्रव्यमेव स्यात् रत्यादयस्तु गुणा इति वाच्यं तेषां जीवद्रव्येभ्योऽपृथग्भूतत्वेन द्रव्यत्वात् शृङ्गारे काम्यं वस्तुप्रतियोगि। यथा पुरुषस्य स्त्री स्त्रियः पुरुषः। वीरे स्वपक्षाविपक्षधर्मयुद्धदानत्रयम्। करुणे शोच्यम्। हास्ये विकृतवेषगत्यनुकरणादि। अद्भुतेऽपूर्वं वस्तु। भयानके पिशाचादि। रौद्रे विपक्षः। बीभत्से व्रणकृत्यादि। शान्ते सर्वासारतादि। इति प्रतियोगिनः। एतेषां दशा स्मृतिरसमवायिकार-

शृङ्गारवीरकरुणा हास्याद्भुतभयानका· ॥
रौद्रबीभत्सशान्ताश्च नवैते कथिता बुधैः ॥ ३ ॥
जायापत्योर्मिथो रत्या वृतिः शृङ्गार उच्यते ॥
संयोगो विप्रलम्भश्चेत्येष तु द्विविधो मतः ॥ ४ ॥
तौ तयोर्भवतो वाच्यौ बुधैर्युक्तवियुक्तयोः ॥
प्रच्छन्नश्च प्रकाशश्च पुनरेष द्विधा मतः ॥ ५ ॥

णं यथा पटस्य तन्तुयोगः। विभावे निमित्तकारणानि यथा पटस्य तन्तुवायतुरीवेमादि। अनुभावा निष्पन्नकार्याणि यथा निष्पन्नस्य टस्य शीतत्राणगुह्यावरणादि।सात्विकव्यभिचारिणः सहजा यथा पटस्य रूपकारादयः ॥ २ ॥

स्थायिनां नव प्रकारास्ततो रसस्यापि नव भवन्ति अतस्तानाह । शृङ्गारेति। उत्तममध्यमाधमप्रकृतीनां सर्वेषां अभीष्टत्वात् प्रथमं शृङ्गारस्य न्यासः ततश्चोत्तमप्रकृतौ भूयस्त्वाद्वीरस्याग्रतः शेषाणां क्रमेण । सर्वरसोत्तंसोत्तंसस्य शान्तस्य तु प्रान्ते प्रतिष्ठा। पूर्वेषामष्टानामनादरेणैहिकामुष्मिकोदयासक्तौ च कस्यचिदेव ज्ञातपरमार्थस्य पुंसः संभवात् । एवं चैते बुधैर्न सर्वदैव न चाधिका न्यूना निश्चिता निर्णीताः ॥ ३ ॥

एतल्लक्षणमाह। जायेति। जायापत्योर्विक्ष्यमाणयोर्नायिकानायकयोर्मिथः परस्परं रतेः प्रेमातिशयस्यावृत्तिः पुनःपुनराभ्यसनमद्वैतमित्यर्थः। सः शृङ्गार उच्यते विद्वद्भिरिति गम्यम्। एष शृङ्गारो (इति) द्विविधा द्विभेदो मतः। इतीतिर्किं। संयोग :१ विप्रलम्भश्च २ । संयुज्येते जायापती अस्मिन्निति संयोगः। विशेषेण प्रलभ्येते वञ्च्येते प्रेमफलेनास्मिन्निति विप्रलम्भः ॥ ४ ॥

तौ कथं स्यातामित्यत आह। ताविति। तौ संयोगविप्रलम्भौ तयोर्जायापत्योर्युक्तवियुक्तयोर्मिलितविरहितयोर्भवतः स्तः।

बुधैर्वाच्यौ वक्तव्यौ पुनरेष प्रागुक्तादिभेदोपि द्विध
प्रच्छन्नप्रकाशाभ्यां । कोर्थः । संयोगशृङ्गारः प्रच्छ
भवति । तथा विप्रलम्भोपि प्रच्छन्नः प्रकाशश्च । प्र
एषु चतुर्ष्वपि शृङ्गारभेदेषु अन्योन्यस्पृहात्मिका
भावः । मिथः स्त्रीपुरुषौ आलम्बनरूपौ विभावौ

कथमपि सखि क्रीडाकोपाद्व्रजेति मयोदिते
कठिनहृदयस्त्यक्त्वा शय्यां बलाद्गत एव स
इति सरभसं ध्वस्तप्रेम्णि व्यपेतघृणे स्पृहां
पुनरपि हतव्रीडं चेतः करोति करोमि किं

अत्र पुनरपीति शब्देन सुभगस्य आलम्बनविभ
ते । तदुपयोगिपवनारामचन्द्रार्कोदयास्तजलक्रीडा
रूपाश्च विभावाः । यथा ।

कावेरीतीरभूमीरुहभुजगवधूभुक्तमुक्तावशिष्टः
कर्णाटीचीनपीनस्तनवसनदशान्दोलनस्यन्दमन्दः
लोलल्लाटीललाटालकललितलतालास्यलीलाविलो
कष्टं भो दाक्षिणात्यः प्रसरति पवनः पान्थकान्ता

अथ पान्थकान्ताकृतान्त इत्यनेन पवनस्योद्दी
प्रतीयते २ । संभोगद्वये स्वेदाश्रुरोमाञ्चकम्पश्वासित
कसंयमनभूषामाल्यादिसम्यग्निवेशचाटुप्रभृतयोनुभा

दीर्घा चन्दनमालिका विरचिता नेत्रैर्विनेन्दीवरै
पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात
दत्तस्वेदमुचा पयोधरभरेणार्घो न कुम्भाम्भसा
स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्ग

अत्र स्वेदाम्भसार्घदानेन तन्व्याः स्वेद
विभाव्यन्ते २ । सुखभयामर्षादयो व्यभिचारिणः

तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयो-
स्तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया ॥
पाणिभ्यां च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः
सख्यः किं करवाणि यान्ति शतधा यत्कञ्चुके संधयः १

अत्र संधयः शतधा यान्तीत्यनेन हर्षाधिक्यं। विप्रलम्भद्वये संतापकृशतादीनवचनजागरविलापलेखलिखनवाचनवार्ताप्रश्नमरणोद्यमसंदेशादयोनुभावाः जुगुप्सालस्यवर्जिताः तदुक्ते बीभत्सादिरसप्रतीतिः स्यात् ॥ उदाहरणानि यथा—

श्रीखण्डकर्पूरमृणालमालाशीतोपचारैः सखि किं ममैतैः ॥
दाहो न देहात्परिवर्तते मे तं स्वैरिणं वैरिणमंतरेण ॥ १ ॥

अत्र दाहः संतापरूपः स्फुटः १ । तथा

मुद्रे सन्ति सलक्ष्मणाः कुशलिनः श्रीरामपादाः स्वयं
सन्ति स्वामिनि मा विधेहि विधुरं चेतोनया चिन्तया ।
एनां व्याहर देवि मैथिलसुते नामान्तरे(ते)धुना
रामस्त्वद्विरहेण कङ्कणपदं यद्यापितो यैश्चिरात् ॥ २ ॥

अत्र कृशता ।

वाता वान्तु कदम्बरेणुशबला नृत्यन्तु सर्पद्विषः
संपूर्णा नवतोयभारगुरवो मुञ्चन्तु नादं घनाः ।
मग्नां कान्तवियोगदुःखजलधौ मां वीक्ष्य दीनाननां
विद्युत्प्रस्फुरसि त्वमप्यकरुणे स्त्रीत्वे समानेपि हे ॥ ३ ॥

अत्र दीनवचनता ।एवमन्यामन्यपि ज्ञेयानि। दुःखप्रायाः स(?)कौत्सुक्यमदग्लानिनिद्रानिर्वेदमरणादयो व्यभिचारिणः यथा—

एकतो रचिता शय्या एकतो रचिता चिता ॥
अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥ १

अत्र कृतान्त इति पदेनानिष्टोत्प्रेक्षारूपा शङ्का । तथा ।

वर्षति न परं मेघः क्षणदायिमृगाक्षिविप्रयोगो नो ॥
प्रहरति न पञ्चबाणः केवलमबले निमेषोपि ॥ २ ॥

अत्रौत्सुक्यं स्फुटमेव यच्च विप्रलम्भेपाशबन्धादिजं मरणं दृश्यते ॥ यथा—

भवतु विदितं व्यर्थालापैरलं प्रिय गम्यतां
तनुरपि न ते दोषोऽस्माकं विधिः स्म पराङ्मुखः ॥
तव यदि तथारूढं प्रेम प्रपन्नामिमां दशां
प्रकृतितरले का नः पीडा गते हत जीविते ॥ ३ ॥

गते हतजीवित इत्यनेन पाशबन्धाद्युपायैर्मरणं सूचितं तदप्यचिरकालसमाप्तिमयमिति न शोकस्यावकाशः एवं चतुःप्रकारा शृङ्गारस्योत्पत्तिः । तत्रैकैकोपि परस्परावलोकनाधरपानचुम्बनाद्यनन्तभेदः परमे एव गण्यते । यथा ।

अलसचलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ॥
हृदयनिहितं मायाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोयं मुग्धे त्वयाद्य विलोक्यते ॥ ४ ॥

तथा ।

अधरेऽमृतमस्ति योषितां हृदि हालहलमेव केवलम् ॥
अत एव निपीयतेधरो हृदयं मुष्टिभिरेव ताड्यते ॥ ५॥

इत्यादीन्यवलोकनाधरपानाद्युदाहरणानि ज्ञेयानि ॥ ९ ॥

केवलगुणमय उत्तमः स्वल्पदोषो बहुगुणो मध्यमः केवलदोषवानधमः तेषु प्रसन्नसंयोगे उत्तमनायके मानाधिकार इति तल्लक्षणमाह रूपेति । अत्र प्रच्छन्नशृङ्गाररूपाविषये रूपसौभाग्याभ्यां परिपूर्णः कुलीनः उत्तमकुलोत्पन्नः कुशलः शास्त्रोक्तस्त्रीकृतहावभावज्ञाता युवा मध्यवयाः अनुद्धतो मात्सर्यादिरहि-

रूपसौभाग्यसंपन्नः कुलीनः कुशलो युवा ॥
अनुद्धतः सूनृतगीः ख्यातो गीतोऽत्र सद्गुणः ॥ ६ ॥

तः सूनृतगीः सत्यवाक् । सद्गुणः सन्तो विद्यमाना गुणा यस्य स तथा ते चाष्टौ यथा । दाक्षिण्यशौर्योत्साहनीचजुगुप्सोत्तमस्पर्धाज्ञापिका शोभा यतः शरीराकाराद्दाक्ष्यादि प्रतीयते धीरे गतिदृष्टिसस्मितं वचश्च विलासः २ मृदुशृङ्गारचेष्टा ललितं ३ महत्यपि शुद्धकाव्यादौ क्षोभहेतौ सत्यपि व्याकुलत्वमाधुर्यं ४ विघ्नेऽपि सत्यपि उद्यमादपरिभ्रंशः स्थैर्यं ५ हर्षादिविकारतनूपलम्भकृद्गाम्भीर्यं यस्मात् क्रोधादीनां बाह्यविकारा दृष्टिविकासमुखरागादय उपलभ्यन्ते ६ स्वेष्विव परेष्वपि परित्राणदानसंभाषणादिचेष्टा औदार्यम् ७ पराक्षेपाद्यसहनं तेजः । पराच्छत्रोः न तु गुरोः मित्रादेर्वा ८ एवंविधो नेता नायकः ख्यातः कथितः स च चतुर्धा १ यथा गूढगर्वः स्थिरो धीरः क्षमावान्नाविकत्थनो मदासह्यो दृढव्रतश्च स्यात् स धीरोदात्तः । यथा । विनयच्छेत्तानवलेपः २ अङ्गीकृतनिर्वाहकः रामादिः १ कलासक्तः सुखी शृङ्गारी निश्चिन्तश्च यः स धीरललितः वत्सराजादिः २ विनयोपशमवान् यः स धीरशान्तः माधवचारुचि(द)त्तादिः ३ शूरो मत्सरी मायावी छलच्छद्मवान्स धीरोद्धतः जामदग्न्यादिः ४ उक्तं च ।

देवा धीरोद्धता ज्ञेया स्युः परे ललिता नृपाः ॥
सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ ॥ १ ॥
धीरप्रशान्ता विज्ञेया ब्राह्मणा वणिजस्तथा ॥
इति चत्वार एवेह नायकाः समुदाहृताः ॥ २ ॥

इति चतुर्विधोऽप्यौत्तम्यानतिक्रमाद्येक एवावसेयः ॥ ६ ॥

पं च विबुधैरुक्तोनुकूलो दक्षिणः शठः ॥
ष्टश्चेति चतुर्धा स्यान्नायकाः स्युश्चतुर्विधाः ॥ ७ ॥
लीरागोनुरक्तः स्यादनन्यरमणीरतः ॥
क्षिणश्चान्यचित्तोपि यः स्यादविकृतः स्त्रियाम् ॥ ८ ॥

थास्य भेदानाह । अयामिति । अयमुत्तमनायको विबुधै- चतुःप्रकार उक्तोऽवाचि । इति किं अनुकूलः १ दक्षिणः २ ३ धृष्टः ४ चेति । एवं नायिकाश्चतुर्विधा स्युः । तल्लक्षणा- कथयिष्यन्ते ॥ ७ ॥

ायकभेदानां लक्षणान्याह । नीलीति । प्रियं नील्या गुल्या ागो यस्य स तथा स्थिरप्रेमेत्यर्थः । अन्यस्यां रमण्यां सक्तश्च यो भवति सोनुकूल उच्यते । यथा ।

भतिविपुलं कुचयुगुलं रहसि करैरामृशन्मुहुर्लक्ष्म्याः ॥
तदुपहृतं वस्तु निजं पतिर्हरिर्मृगयमाण इव ॥ १ ॥

अत्र हरेः मुहुरामर्शनेनानुकूल्यं अन्यरमण्यनासक्तिर्व्य- । यथाऽन्यचित्तोपि अन्यरमणीरक्तमना अपि स्वस्त्रियाम- कृतः सप्रेमा स उभयोरपि दाक्षिण्यशीलत्वात् दक्षिण ुच्यते । यथा ।

दृष्ट्वैकासनसंगते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः ।
तिर्यग्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासिचलत्कपोलफलकां धूर्तोपरां चुम्बति ॥ १ ॥

अत्रैकासनस्थितयोरेकस्या नयननिमीलनेन अपरायाश्चुम्ब- दाक्षिण्यमकारि ॥ ८ ॥

यस्तस्या अभिप्रेतनायिकाया अप्रियं कुर्वन् प्रियं मनोहरं के निजापराधगोपनाय स शठ उच्यते । यथा ।

प्रियं वक्त्यप्रियं तस्याः कुर्वन् यो विकृतः शठः ॥
धृष्टो ज्ञातापराधोपि न विलक्षोपमानितः ॥ ९ ॥
अनूढा च स्वकीया च परकीया पणाङ्गना ॥
त्रिवर्गिणः स्वकीया स्यादन्या केवलकामिनः॥ १० ॥
कोपात्कोमललोलबाहुलतिकापाशेन बद्धा दृढं
नीत्वा चासमकेतनं दयितया सायं सखीनां पुरः ॥
भूयो नैवमिति स्खलन्मृदुगिरा संमूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान् हसत्यारुदन् ॥१॥

अत्र निह्नुतिपर इत्यनेन शठत्वं स्पष्टम् ॥ यः प्रत्यक्षं निरपराधोपि नायिकया अपमानितोवगुणितः सन् विलक्षो व्रीडाधान्स धृष्टः स्यात् यथा ।

चरणपतनप्रत्याख्यानात्प्रसादपरा सखे
निभृतकितवाचारेत्युक्ते रुषापरुषीकृते ॥
व्रजति रमणे निश्वस्योच्चैः स्तनाहितहस्तया
न सलिलछन्ना दृष्टिः सखीषु निपातिता ॥ ४ ॥

अत्र सापराधत्वात्पतिश्चरणयोः पतन् प्रतिषिद्धो धृष्टत्वात् व्रजति४ शास्त्रान्तरे एताश्चतस्त्रोप्यवस्था एकस्य नायकस्य । यथा

सा ते भवतु सुप्रीता यस्या देव्याः स्तनद्वये ॥
अन्योन्यं कलहायन्ते चत्वारो हरिबाहवः ॥ १ ॥

अत्र चतुर्भुजानां कलहेनानुकूलत्वं प्रतीयते ।

रुक्मिणीभामयोः प्रेम्णा पृथक् पार्श्वद्वयस्थयोः॥
कुरुते युगपत्पाणौ द्वयसौख्यं चतुर्भुजः ॥ २ ॥

अत्र दाक्षिण्यं स्पष्टं विप्रलम्भयितुं भीमां कृपावक्षः कांक्षे चतुर्भुजः ४ शेषाभ्यां वक्षःकांक्षणं धाष्टर्यं इति ॥ ९ ॥

प्राङ्नायिकायाः चतुर्भेदा उक्ता ते चामी अनूढेति । अनूढा

अनुरक्तानुरक्तेन स्वयं या स्वीकृता भवेत् ॥
सानूढेति यथा राज्ञो दुष्यन्तस्य शकुन्तला ॥ ११ ॥
देवतागुरुसाक्ष्येण स्वीकृता स्वीयनायिका ॥
क्षमावत्यतिगम्भीरप्रकृतिः सच्चरित्रभृत् ॥ १२ ॥

कन्या १ स्वकीया २ परकीया पण्याङ्गना ४ इति । चत्वारो भेदा भवन्ति तासु त्रिवर्गिणः धर्मकामार्थत्रयार्थिनः स्वकीया स्यात् । यथा रामस्य सीता अन्यास्तिस्त्रः केवलकामिनः केवलसुखार्थिन एव यथा माधवानलादीनां कामकन्दलादयः ॥ १० ॥

प्रथमाया लक्षणमाह । अनुरक्तेन प्रणयप्रेरितेन नायकेन अनुरक्तायाः स्वयं देवतागुरुसाक्षित्वं विना स्वीकृता भवेत् भोक्तुमिति गम्यं सा नायिका अनूढा कथ्यते । यथा दुष्यन्तस्य राज्ञः शकुन्तला नाम ऋषिपुत्री तेन हि विपिनगतेन सा विजनमिलिता प्रणयपात्रमकारि ॥ ११ ॥

द्वितीयालक्षणमाह ॥ देवतेति ॥ या देवगुरुसाक्ष्येणोत्तमप्रकृतिनायकेन स्वीकृता पाणौ गृहीता स्वीयनायिका स्यात् । शेषं स्पष्टं । एषा वयःकौशलाभ्यां मुग्धा १ मध्या २ प्रौढा ३ चेति त्रिधा । तासु प्रथमायाः क्रोधादिचेष्टा न स्युः मुग्धत्वात् । यथा ।

पदालग्ने पत्यौ नमयति मुखद्योतिविनया
हठश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ॥
न शक्नोत्याख्यातुं स्मितमुखसखी दत्तनयना-
प्यसौ साक्षाद्दोषं प्रथमवधूः सा मौग्ध्यमधुरा ॥ २ ॥

यद्वा ।

खिद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक् ॥
अन्तर्नन्दति च चुम्बितुमिच्छति न च परिणयाद्वधूशयने ॥ २ ॥

अत्र मौग्ध्यं। मध्या त्रेधा धीरा १ धीराधीरा २ अधीरा ३ च तत्र मध्या धीरायाः क्रोधे उत्प्रासवक्रोक्ती स्यातां। यथा॥

अङ्गुल्या कः कपाटं प्रहरति कुटिले माधवः। किं वसन्तो
नो चक्री किं कुलालो नहि धरणिधरः। किं द्विजिह्वः फणीन्द्रः।
नाहं घोराहिमर्दी किमसि खगपतिर्नो हरिः। किं कपीन्द्रो
इत्येवं राधाविवादे प्रतिवचनजडः पद्मनाभः पुनातु ॥ १ ॥

मध्या धीराधीरा यथा।

सा पत्युः प्रथमेपराधसमये सख्योस्तु शिक्षां विना
नो जानाति सविभ्रमाङ्गचलनं वक्रोक्तिसंसूचनम् ॥
स्थैर्यच्छेककपोलमूलगलितैः पर्यस्तनेत्रोत्पला
रामा रोदिति केवलं प्रतिलुठन्लोलोदकैरश्रुभिः॥ २ ॥

मध्याधीराया वाक्पारुष्यं। यथा।

संध्यायां प्रणिपत्य लोकपुरतो बद्धाञ्जलिं याचसे
धत्से यच्च नदीं विलज्जशिरसा तन्नाम सोढुं मया ॥
श्रीर्याताम्बुधिमन्थने यदि हरिं कस्माद्विषं भक्षितं
मा स्त्रीलम्पट मा स्पृशेत्यभिहितो गौर्या हरः पातु वः ३

अत्र स्त्रीलम्पटेपि गौर्या अधीरतया परुषमवाचि ॥ ३ ॥

एवं प्रौढापि त्रेधा। तत्र प्रौढाधीरायाः उपचारावहित्थे स्यातां यथा॥

विरहविषमः कामो वामः तनुं कुरुते तनुं
दिवसगणनादक्षश्चीयं यतेत घृणो यमः ॥
त्वमपि वशगोवश्यं तस्या विचिन्तय नाथ हे
किसलयमृदुर्जीवेदेवं कथं प्रमदाजनः ॥ १ ॥

अत्र तस्या वश्यग इत्यनेन ज्ञातक्रोधाया अपि प्रौढाया धीरत्वेन क्रोधसंगोप्यनाद्धेत्याद्युपचारः॥ १ ॥ प्रौढाधीराधीराया अनुकूल्यौदासीन्ये। यथा।

मा पादौ मे विलुठ विरम स्वामिनो हि स्वतन्त्रा
किंचित्कालं क्वचिदपि गतस्तेन कस्तेपराधः ।
आगस्कारिण्यहमपि मया जीवितं तद्वियोगे
भर्तुः प्राणास्त्रिय इति ततो वा मयैवानुनेयः ॥ २ ॥

अत्र प्रौढाया धीरतया मा पादान्ते विलुठ। स्वामिनः स्वतन्त्रा इति च औदासीन्यम् । अधीरतया आगस्कारिण्यहमित्यानुकूल्यम् २ प्रौढाधीरायाः संतर्जनायातौ । यथा ।

नास्त्यत्र ते निस्त्रप चित्तमित्थं संतर्जयन्ती जघनाज्जघान ॥
काचित्प्रियं प्रेमकलौ निपात्य सदर्पहासंहसतिप्रयोगात् ॥ ३ ॥

अत्राधीरतया संतर्जनायातौ स्पष्टौ । एताः षडपिज्येष्ठा कनिष्ठाश्च भवन्ति । तत्र पूर्वपरिणीता ज्येष्ठाः पश्चात्परिणीता कनिष्ठा इति द्वादश मुग्धया सहितास्त्रयोदशधापि नायिका स्वकीयात्वेनैकैव गण्यते । तस्याश्च २० अलंकाराः तद्यथा । वाग्विचेष्टितैः प्रियस्यानुकृतिलीला: १ ऊर्ध्वस्थानादिविशेषो विलासः २ सौभाग्यगर्वादल्पालंकारन्यासशोभा विच्छित्तिः ३ गर्वादभीष्टेपि अवज्ञाविब्वोकः ४ स्मितहसितरुदितभयारोषगर्वितश्रमाभिलाषसंकरः किलकिंचितम् ५ प्रियकथादौ तद्भावे तत्त्वं मोट्टायितम् ६ अधरादिग्रहात् दुःखेपि हर्षः कुट्टमितम् ७ मसृणाङ्गविन्यासो ललितम् ८ प्रियकृतव्यलीकावसरेप्यजल्पनम् । विहृतम् ९ । वागङ्गभूषणानां विपर्यासो विभ्रमः १० इत्येते दश सहजाः कामकलादावसाध्वसत्वम् । प्रागल्भ्यम् १ सत्यपि पत्युरपराधे स्नेह औदार्यं क्रोधेपि वचनाद्यपारुष्यं माधुर्यं रूपयौवनलावण्यैः पुंभोगादभिवर्धितैः मन्दा मध्या तीव्रा अङ्गच्छायाक्रमेण शोभा ४ कान्ति ५ दीप्तयश्च ६ अचापलैरवि-

परकीयाप्यनूढेव वाच्यभेदोऽस्ति चानयोः ॥
स्वयमप्यतिकामैकं सख्यौ चैका प्रियं वदेत् ॥१३॥

कत्थनत्वे धैर्यम् ७ एते सप्त अयत्नजाः हाव १ भाव २ हेला३ अल्पबहुभूयोविकारात्मकास्त्रयः शरीरजाः एवमेते विंशतिरप्युत्तमनायिकाया एव स्युः । अन्यासु रूपलावण्यवतीष्वपि अभावात् एते बाल्ये अनुद्भिन्नयौवने उद्रिक्ता दृश्यन्ते वार्धके तिरोभूताः पुरुषस्याप्यमी भवन्ति । तथापि योगिनामेत एव अलंकारा इति तद्गतत्वेन वर्ण्यन्ते । पुंसस्तु उत्साह एव परमोलंकार इति ॥ १२ ॥

परस्त्रीलक्षणमाह । परकीयापि पररूयपि अनूढेव पूर्वोक्ताऽपरिणीतकन्येव स्यात् । परमनयोः अनूढापरिणीतकन्ययोः वात्त्यन्तभेदो वक्तव्यताविशेषोस्ति । यथानूढा च अपरिणीतैव कन्या परिकीया तु परिणयानन्तरमेव सधवा १ विधवा २ वा विधवा केनापि स्वीकृता १ न तदन्या चेति त्रिधा परकीया । तस्या संघट्टनोपायमाह । स्वयम् । एका काचिदतिकामा कामा स्वरोन्मत्ता सती स्वयमात्मना प्रियमनोभिप्रायं वदेत ज्ञापयेत नायकाया । यथा ।

मध्यान्हे च खरे निदाघसमये देवे रवौ मुञ्चति
शीते कुब्यवटे सुपत्रनिचये हे पान्थ विश्राम्यताम् ।
एकाकी च भवानहं च तरुणी शून्या प्रपा वर्तते लज्जा
मे भणितुं स्वयं च चतुरो जानासि कालोचितम् ॥ १ ॥

यद्वा ।

एकाकिनी यदबला तरुणी तथाह-
मस्मिन् गृहे गृहपतिश्च गतो विदेशम् ॥
किं याचसे तदिहवासमियं वराकी
श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥ २ ॥

सामान्यवनिता वेश्या भवेत्कपटपण्डिता ॥
नहि कश्चित्प्रियः स्वस्या दातारं नायकं विना ॥ १४ ॥

अपरा एका सख्यादूतीमुखेन अभीष्टप्रकटे च यथा अन्वे अरुइअरुइ जुगवं जाआइं सामिणीइ महंदोसजुहय सुंदरं पहितु मंतच्छपीडयरिपुं ॥ ३ ॥ स्वपरस्त्रियोष्टौ तिस्रस्तावत्या भवन्ति । स्वाधीनपतिका १ प्रोषितभर्तृका २ परवनितां परासक्ते प्रिये दुःखतप्ता खण्डिता ३ ईर्ष्याकलहेन गते भर्तरि संगमेनान्तारिताकलहान्तरिता ॥ ४ ॥

परिपाट्यां फलार्थे वा नवप्रेमध्य एव वा
दुःखेचैव प्रमोदे च षडेते भासकाः स्मृताः ॥ १ ॥
उचिते वासके स्त्रीणामृतुकालेपि वा बुधैः ॥
द्वेष्याणामथ चेष्टानां कर्तव्यमपसर्पणम् ॥ २ ॥

इति नयेन वासके संभोगलालसतयाङ्गरागहीना प्रगुणा वासकसज्जा५ प्रियंमन्या चिरयाति दयिते विरहोत्कण्ठिता६ दूतीमुखेन स्वयं संकेताद्यासंकेत्यनेनकारणेन पत्या वञ्चिता विप्रलब्धा७ अभिसरति अभिसारयाति वा कान्तं कामार्ता सतीत्यभिसारिका ८ इति ॥ १३ ॥

पण्याङ्गनास्वरूपमाह । सामान्येति । सगुणनिर्गुणयोः साधारणत्वात् सामान्यवनिता वेश्या भवेत् कथंभूता कपटपण्डिता- कौटिल्यनिपुणा केवलधनलाभालम्बनेन कृत्रिमप्रेमत्वाद्यथा ॥

या विचित्रविटकोटिनिघृष्टा
मद्यमांसनिरतातिकनिष्ठा ॥
कोमला वयसि चेतसि दुष्टा
तां भजन्ति गणिकां नहि शिष्टाः ॥ १ ॥

कुतः । क्षयिमप्रेमत्वमित्याह । यतस्तस्या दायकं नायकं विना मक्का अपरः कश्चिन्नापि योऽभीष्टः यथा—

सर्वं प्रकाशमेवैषा याति नायकमुद्धता ॥
वाच्यः प्रच्छन्न एवान्यस्त्रीणां प्रियसमागमः ॥ १५ ॥
पूर्वानुरागमानात्मप्रवासकरुणात्मकः ॥
विप्रलम्भश्चतुर्धा स्यात्पूर्वः पूर्वोह्ययं गुरुः ॥ १६ ॥
स्त्रीपुंसये र्नवालोकादेवोल्लासितरागयोः ॥
ज्ञेयः पूर्वानुरागोयमपूर्णस्पृहयोर्दशा ॥ १७ ॥
ज्ञात्यन्धाय च दुर्मुखाय च जराजिर्णाखिलाङ्गाय च
ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च ॥
यच्छंतीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया
पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु को रज्यते ॥ २ ॥ १४ ॥

प्रच्छन्नप्रकाशयोर्विभागमाह ॥ सर्वमिति ॥ एषा वेश्या सर्वं प्रकाशं सर्वप्रकटं यथा स्यादेवं नायकं याति सेवते । यत उद्धता अन्यस्त्रीणां तिसृणां नायिकानां प्रियसमागमः प्रच्छन्न एव वाच्यः नायिकाया ईर्ष्याहेतुः सपत्नीप्रान्तेनायिकाः ॥१५॥

अथ वियोगभेदानाह । पूर्वेति । पूर्वानुरागः१ मानात्मा २ प्रवासः३ करुणात्मकः ४इति विप्रलम्भो वियोगश्चतुर्धा चतुःप्रकारः स्यात् अयं पूर्वः प्राक्तनः गुरुस्तीव्रः चतुर्थात्तृतीयः तृतीयाद्वितीयः द्वितीयात् प्रथमो दुःसह इति ॥ १६ ॥

आद्यभेदालक्षणमाह । स्त्रीपुंसयोः नायिकानायकयोः प्रथमदर्शनादेवोदितप्रेम्णोः या पूर्णेच्छयोर्दशाऽवस्था स्यात् । सा पूर्वानुरागो नाम वियोगो ज्ञेयः ॥ यथा—
जागर्ति लोको ज्वलति प्रदीपः सखीजनः पश्यति कौतुकानि ॥
मुहूर्तमेकं कुरु कान्त धैर्यं बुभुक्षितः किं द्विकरेण भुङ्क्ते ॥ १ ॥

अत्र नायकस्य पूर्वानुरागः ॥

मानोन्यवनितासंगादीर्ष्याविकृतिरुच्यते ॥
प्रवासः परदेशस्थे प्रिये विरहसंभवः ॥ १८ ॥

आयाते दयिते मनोरथशतैर्नीत्वा कथं वै दिनं
वैदग्ध्योपगमाज्जडे परिजने दीर्घां कथां कुर्वति ॥
दष्टास्मीत्यभिधाय सत्वरपदं व्याधूय पीनांशुकं
तन्वङ्ग्या रतिकातरेण मनसा नीतः प्रदीपः शमम् ॥ २ ॥

अत्र नायिकायाः सर्वानुरागः प्रदीपशमनं यावत् ॥ १७ ॥

द्वितीयमाह ॥ मानइति ॥ प्रियस्यान्यवनिताव्यासंगान्नायिकाया ईर्ष्याविकृतिः पराङ्मुखत्वादिः प्रियस्य वा नायिकावज्ञादिना विकृतिः समानवियोगो यथा ।

निश्वासावदनं दहन्ति हृदयं निर्मूलमुन्मूल्यते
निद्रा नैति न दृश्यते प्रियमुखं नक्तंदिनं रुद्यते ॥
अङ्गं शोषमुपैति पादपतितः प्रेयांस्तदोपेक्षितः
सख्यः किं गुणमाकलय्य दयितोऽवज्ञां वयं कारिताः ३

अत्र नायिकादत्तसख्युपालम्भैर्नायकस्य मनो ज्ञायते ॥

लिखन्नास्ते भूमिं बहिरवनतःप्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ॥
परित्यक्तं सर्वं दशितपठितं पञ्जरशुकै-
स्तवावस्था चेयंविसृज कठिने मानमधुना ॥ ४ ॥

अत्र नायियामानप्रकारः ॥ तृतीयमाह ॥ यथा ॥

प्रिये प्रियायां देशान्तरे स्थेयो
विरहिणां बालां चिरं ध्यायताम् ॥
अध्वन्येन विमुक्तकंठमाखिलां रात्री तथा क्रंदितं
ग्रामीणैः पुनरध्वगस्य वसतिर्ग्रामे निषिद्ध यथा ॥ ५ ॥

अत्र नायकस्य स्फुटं विरहः ।

स्यादेकतरपञ्चत्वे दम्पत्योरनुरक्तयोः ॥
शृङ्गारः करुणाख्योयं वृत्तवर्णन एव सः ॥ १९ ॥
दुर्वाराः स्मरमार्गणाः प्रियतमे दूरे मनोत्युत्सुकं
गाढं प्रेमनवं वयोतिकठिनाः प्राणाः कुलं निर्मलम् ॥
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोक्षमी
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं मया ॥६॥

अत्र नायिकायाः प्रियतमो दूरे इत्यनेन प्रवासः ॥ १८ ॥

चतुर्थमाह । स्यादिति । स्निग्धयोर्नायिकयोरेकस्य पञ्चत्वे मरणे अपरस्य प्रियायाः विरहः करुणाख्योयं करुणनामा स्यात् । परं स वृत्तवर्णने आचारदावख्यापनयैव प्रयोजनवानिति गम्यं । यथा ।

तीरात्तीरमुपैति रौति करुणं चिन्तां समालम्बते
किंचिद्ध्यायाति निश्चलेन मनसा योगीव मुक्तेक्षणः ॥
स्वांच्छायामवलोक्य कूजति च यः कांतामृतौ चक्रव-
द्धन्योयं प्रणयी न रासभ इव स्याद्यत्र तत्रादतः ॥ १ ॥

अत्र नायकस्य करुणविरहः ।

गतियुगलकमेवोन्मत्तपुष्पोत्करस्य
त्रिनयनतनुसेवा चाथ वा भूमिपालः ॥
विमलकुलभवानामङ्गनानां शरीरे
पतिकरकरजो वा सेवते सप्तजिह्वः ॥ १ ॥

अत्र नायिकायाः आचारधार्ष्ट्यं । इत्थं चतुर्ष्वपि विप्रलंभेषु नायिकानायकपरतयोदाहरणद्वयं प्रदर्शितं एष संयोगवियोगप्रच्छन्नप्रकाशादिभेदः शृङ्गारो नियतनायकनिष्टतयैव प्रतिपादितः। काव्ये नामै च ममैषा प्रिया यमैतद्वनं मां प्रति प्रणयात् कटाक्षक्षेप इत्यादिसंबंधं विनैव पात्रातिनीयमानतत्तद्वेषगतिवचनादिदर्श-

उत्साहात्मा भवेद्वीरस्त्रेधा धर्माजिदानतः ॥
नायकोत्र भवेत्सर्वैः श्लाघ्यैरधिगतो गुणैः ॥ २० ॥

नश्रवणानुभवरूपैर्विभावानुभावादिभिः साधारण्येन प्रतीतेरभिव्यक्तः सत्यानांवासनारूपेण स्थितः स्थायी रतिनामानुभूयमाननैरुस्वभावो विभवादिस्मरणावधिरलौकिकचमत्कारकारितया केवलं सुरतसमय एव शृङ्गारः । यत उक्तम् ।

सुभाषितरसास्वादजातरोमाञ्चकञ्चुकाः ॥
विनापि कामिनीसंगं श्रोतारः सुखमासते । इत्यादि ॥ १९ ॥

अथ वीररसमाह । उत्साहेति । उत्साह आत्मा स्थायी यस्यसतथा । उत्साहस्थायी वैरिगतान्यायामूढव्यवसायप्रतापविक्रमाधिक्षेपाविभावाः धैर्यगाम्भीर्यादयोनुभावाः धृतिस्मृतिगर्वामर्षाव्यभिचारिणश्च स्वयं ज्ञेयाः इत्येवं वीररसो भवेत् त्रेधा त्रिप्रकारः कुतः धर्माजिदानतः धर्मवीराः श्रीवज्रायुधादयः । यथा ।

तुलयति मदभारः सर्वथा चेन्न पारा-
पतमभिमतमेतद्वर्तते तन्ममैव ॥
यदुपक्रन्महेस्मिन् रंहसेदं विनाशि
व्यायितमहहताङ्गं तद्वयिष्यामि कर्हि ॥ १ ॥

अत्र पारापतरक्षार्थं निजशरीरस्यापि व्ययेच्छा । युद्धवीरा मेघनादरामप्रभृतयः । यथा ।

क्षुद्राः संत्रासमेते विजहत हरयः क्षुण्णशुक्रेभजंभा-
युष्मद्देहेषु लज्जां दधाति परममी सायकानिष्पतंतः ॥
सौमित्रे तिष्ठ पात्रं त्वमसि मम रुषां नन्वहं मेघनादः
किंचित्संरम्भलीलानियमितजलधिं राममन्वेषयामि ॥ २ ॥

अत्र हरीन् लक्ष्मणं च मुक्त्वा रामान्वेषणं वीररूपं दानवीरा विक्रमबलिप्रभृतयः । यथा ।

शोकोत्थः करुणो ज्ञेयस्तत्र प्रणतरोदने ॥
वैवर्ण्यमोहनिर्वेदप्रलापाश्रूणि कीर्तयेत् ॥ २१ ॥
हासमूलं समाख्यातो हास्यनामा रसो बुधैः ॥
चेष्टाङ्गवेषवैकृत्याद्वाच्यो हास्यस्य चोद्भवः ॥ २२ ॥

अष्टौ हाटककोटयस्त्रिनवतिर्मुक्ताफलानां तुलाः
पञ्चाशन्मदगन्धमत्तमधुपक्रोधोद्धुराः सिन्धुराः ॥
तारुण्योपनयः प्रपाञ्चितदृशां वाराङ्गनानां शतं
दण्डे पाण्डुनृपेण ढौकितमिदं वैतालिकस्यार्पितम् ॥३॥

त्र दानवीरत्वं स्पष्टम् । इत्यादि । एतन्नायकमाह । नाय-
। अत्र वीररसे सर्वैः प्रशंसनीयैः स्थैर्यादिभिर्गुणैरधिगतो
नायको भवेत् व्यसनीयापक्वलुब्धः स्तब्धो धीरोद्धतः ।
ायकः रावणदुर्योधनादिः ॥ २० ॥

कइति । शोकात् स्थायिनः इष्टवियोगानिष्टसंयोगादिविभा-
त्तिष्ठतीति शोकोत्थः करुणो रसो ज्ञेयः । तत्र शोकोश्रुपात-
दैवोपलम्भाद्याः अनुभावाः वैवर्ण्यमोहनिर्वेदादयो व्यभि-
ाः कीर्तयेत् कथयेत् । अस्योदाहरणम् ।

मातस्त्वरितासि कुत्र किमिदं हा दैवतः क्वासि भो
कप्राणान्पतितोशनिर्हुतवहः स्वाङ्गेषु दग्धे दृशौ ॥
थं घर्घरमध्यरुद्धकरुणं पौराङ्गनानां गिरः
त्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भीतीरपि ॥

ोनि ॥ २१ ॥

ास्यरसमाह । हासेति । हासो मूलं स्थायीभावो यस्य स
लो हासनामा रसो बुधैः समाख्यातः । अस्योत्पत्तिमाह ।
। चेष्टास्वपरगतिवचनानुकृतिप्रभृतयः । अङ्गवेषवैकृत्यं
शिरसिजकर्तनाऽप्रकाश्यावयवप्रकाशनादिः ततः समाहारः

कपोलाक्षिकृतोल्लासो भिन्नोष्ठः स महात्मनाम् ॥
विदीर्णास्यश्च मध्यानामधमानां सशब्दकः ॥ २३ ॥
तस्माद्विभावात् हास्यस्य चोद्भवो वाच्यः ॥ २२ ॥

अस्यानुभावानाह । कपोलाक्षीति । कपोलयोरक्ष्णोश्च कृत उल्लासो येन स तथा । उपलक्षणादोष्ठस्पन्दननेत्रविकासमुखरागहस्ततालाद्या अनुभवाः त्रपावहित्थानिद्रालस्यादिव्यभिचारिणश्च ज्ञेयाः । स हास्यरसस्त्रेधा स्मितं १ विहासितं २ अपहासितं ३ चेति । तत्र महात्मनामुत्तमानामभिन्नोष्ठं कपोलोल्लासमात्रं स्मितं स्यात् १ । मध्यमानां विदीर्णास्यं दृष्टदशनं कालागतौ विहासितं २ । अधमानां सशब्दं साश्रुनेत्रं निर्हेतुकं कम्पितांसशिरस्कमपहासितम् ३ । एतानि स्मितादीनि दृष्ट्वा परस्य क्रमेण संक्रमणजानि हसितोपहसितानि ॥ तत्राद्यं उत्फुल्लास्यनेत्रं विकासिगण्डं किञ्चित्कासिगण्डं किञ्चिद्दृश्यदन्तम् १ द्वितीयं उत्फुल्लनासं विजिह्मदृष्टिनिरीक्षणं निकुञ्चितांसशिरस्कम् २ तृतीयं ससंरम्भं साश्रुनेत्रम् उद्धतं सशब्दं सकराघातम् ३ । अयं भावः । परं हसन्तं दृष्ट्वा स्वयं विभावादीन्नपश्यन्नपि नरो हसति यथाम्लदाडिमरसास्वादः पार्श्वस्थपुरुषमुखेष्वपि लालाकरः संक्रमणस्वरूपत्वादेवं हासोपि न चान्ये रसाः । यस्तु स्वामिशोकात् भृत्यस्य शोकः सस्वामिहेतुकोन्य एव करुणारसः ॥ ननु संक्रमणजो हास्यवत् कश्चिद्गाम्भीर्यात् बहिर्हसन्न दृश्यते । परं विभावादियोगेन्तर्हासः स्यादेवेत्यर्थः । उदाहरणं यथा ।

आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ॥

विस्मयात्माद्भुतो ज्ञेयः स चासंभाव्यवस्तुनः ॥
दर्शनात् श्रवणाद्वापि प्राणिनामुपजायते ॥ २४ ॥
तत्र नेत्रविकासः स्यात्पुलकः स्वेद एव च ॥
निस्पन्दनेत्रता साधुसाधु वा गद्गदा च गीः ॥२५॥

तारस्वरं प्रहितधूर्तमदात् प्रहारं
हाहा हतोहमिति रोदिति विष्णुशर्मा ॥ १ ॥

तथा ।

कृत्वा कोदण्डदण्डं करतलकलितं धावधाव स्मर त्वं
पश्य श्यामैककोशे व्यथित तव बहिःसारशंसी तु कश्चित् ॥
नीवीपार्श्वेर्धदत्तं कठिनमिति—-क्षात्रमेकत्र मुक्ता
खातं नित्यावदातं शुनरपि न दधः(?) केचन स्तेनवृत्त्या॥२॥

उभयत्र हास्यं स्पष्टम् ॥ २३ ॥

अथाद्भुतरसमाह ॥ विस्मय इति तत्रेति च ॥ विस्मय आत्मा स्थायी यस्य स तथा अद्भुतरसो ज्ञेयो विद्वद्भिः स च दिव्यविमानेन्द्रजालवदातकमीप्सितावाप्तिप्रभृतिसरम्भाव्यस्य दुर्लभस्य वस्तुनः पदार्थस्य दर्शनश्रवणरूपाविभावात् प्राणिनां सहृदयाङ्गिना उपजायते भवति ॥ २४ ॥

अस्यानुभावानाह ॥ तत्राद्भुते निष्पन्ने नेत्रविकासः पुलकः स्वेदो निर्निमेषता साधुसाध्विवति वचः गद्गदा अव्यक्ता गीश्च तनुभाश्च भवन्ति उपलक्षणात् हर्षाश्रुप्रसाददानादयोपि तथा हर्षावेगजाड्यादिव्यभिचारिणोपि । यथा ।

चित्रं महानेष बताविकारः क्व कान्तिरेषाभिनवैव भङ्गि ॥
लोकोत्तरं धैर्यमहो प्रभावः कोप्याकृतिर्भूतन एष सर्गः ॥१॥

अथ वा ।

दमनकतरुशाखालम्बिजम्बीरयुग्मं
विकचकमलकोशे दाडिमीबीजपङ्क्तिः ॥

भयानको भवेद्भीतिप्रकृतिर्घोरवस्तुनः ॥
स च प्रायेण वनितानीचबालेषु शस्यते ॥ २६ ॥
तुहिनकिरणबिम्बे खञ्जरीटप्रकार-
स्त्रितयमिदमपूर्वं देव दृष्टं मयाद्य ॥ २ ॥

अत्राद्भुतता इत्यादि ॥ २५ ॥

भयानकमाह । भयानकेति । भीतिः प्रकृतिः स्थायी यस्य स भीतिप्रकृतिः भयानको नाम रसो भवेत् । कुतः घोरवस्तुनः पिशाचादिदर्शनविकृतस्वरश्रुतिशून्यगृहारण्यान्धकारादिरूपविभावात् ॥ स च भयानकः प्रायेण वनितासु नीचेषु शिशुषु च शस्यते वर्ण्यते । स्वाभाविकस्य तस्य तत्रैव सद्भावात् । उदाहरणं यथा ।

बालैरालपहीनैर्विगलितनयनैः कम्पमानाल्पकायै-
र्भङ्क्त्वा वेगात्प्रविष्टं निजनिजजननीजातजङ्घाभुजासु ॥
ताभिः स्वाभीप्सितानां प्रणयिषु हृदयेष्वेभिरङ्गेषु लीने
श्रीशैवे येन वक्त्रं प्रकटितपवनैः प्रेरिते पाञ्चजन्ये ॥१ ॥

अथवा ।

अम्बाम्बेति वचो वदन्ति शिशवो हाहेत्यमी कातरा
व्योमस्थाः प्रिय रक्षरक्ष इति च प्रोचुः स्त्रियः स्वर्गिणाम् ॥
नागाः शेषशिरोन्तरे प्रविविशुः कल्पान्त इत्युत्सुका
एषा वीरविभा दुनोतु दुरितान्यङ्गुष्ठचेष्टाङ्गिना ॥ २ ॥

इत्यादि । उत्तमास्तु भयाभावेपि गुरुराजादिभ्यो भयं दर्शयन्तः सुकरमुत्तमाः स्युः । भये विदर्शिते गुरुर्विनीतं मन्यते । करकम्पादिचेष्टायामधमप्रकृतिं गणयति ॥ भयवत्कृतकरत्वाद्यपि वेश्यादौ संभवति ॥ परं तत्कथनेन किंचित्फलं गुरुराजाद्योपि परानुग्रहाय कृतकं क्रोधादि प्रकटयन्ति अस्यानुभावाः त्रासवैव-

दिगालोकास्यशोषाङ्गकम्पगद्गदपञ्चमाः ॥
त्रासवैवर्ण्यमोहाश्च वर्ण्यन्ते विबुधैरिह ॥ २७ ॥
क्रोधात्मको भवेद्रौद्रः क्रोधश्चारिपराभवात् ॥
भीष्मवृत्तिर्भवेदुग्रःसामर्षस्तत्र नायकः ॥ २८ ॥
स्वांसापातस्वसंश्लाघाक्षेपभ्रुकुटयस्तथा ॥
अत्राराजि जनाक्षेपो दलनं चोपवर्ण्यते ॥ २९ ॥

र्ण्यमोहाद्याश्च व्यभिचारिणो विबुधैर्वर्ण्यन्ते कथ्यन्ते॥२६॥२७॥

अथरौद्रमाह ॥ क्रोधादिति । क्रोध आत्मा स्थायी यस्य स क्रोधात्मको रौद्रो नाम सो भवेत् । क्रोधश्च देशदारापहारजाविद्यानिन्दाक्रोधाद्यरिपराभवरूपविभवादुद्भूतः स्यात् । यथा

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ॥
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ १ ॥

इत्यादि । तत्ररौद्रे भीष्मवृत्तिर्भयंकरव्यापारःसामर्षः सासूयः उग्रः प्रचण्डो नायको भवेत् ॥२८॥

एतदनुभावव्यभिचारिण आह । अत्र रौद्रेस्वस्कन्धप्रहतिस्वश्लावात्रासाक्षेपणभ्रुवोनुभावाः उपलक्षणात् नेत्ररागदन्तोष्ठग्रहणरुधिराकर्षणादीन्यपि भवन्ति । तथा विपक्षपक्षाक्षेपो दलनं वैरिमर्दनमुपलक्षणादौ आवेगामर्षाद्यापि च व्यभिचारितयोपवर्ण्यन्ते ॥ २९ ॥

अथ बिभत्सरसमाह ॥ बीभत्सइति । बीभत्सो नाम रसो जुगुप्सारूपस्थायिनः स्यात् ॥ जुगुप्सा वमनव्रणपूतिकीटादिवस्तुश्रवणेक्षणविभावादुदेति ॥ यथा—

उत्कृत्योत्कृत्य कृत्तिं प्रथममथपृ च्छोपभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्यग्रपतीनि जग्ध्वा ॥

बीभत्सः स्याज्जुगुप्सातः साहृद्यः श्रवणे क्षणात् ॥
निष्ठीवनास्यभङ्गादि स्यादत्र महतां न च ॥ ३० ॥
सम्यक्ज्ञानसमुत्थानः शांतोनिः स्पृहनायकः ॥
रागद्वेषपरित्यागात्सम्यक्ज्ञानस्यचोद्भवः ॥ ३१ ॥

आत्तस्वाद्यन्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादास्थिसंघं स्थपुटगतिमतिक्रव्यमव्यग्रमात्ति ॥ १ ॥

अपि च ।

यकृच्छकृन्मलश्लेष्ममज्जास्थिपरिपूरिताः ॥
स्नायुस्यूता बहीरम्यास्त्रियश्चर्मप्रसेविकाः ॥ २ ॥

इत्यादि । अत्र बीभत्से थूत्कातिर्वक्त्रभङ्गः आदिशब्दाद्गात्रसङ्को-चहृल्लासनासाविकूणनपिधानाद्यपि अनुभावतया ज्ञेयं स्यात् ॥ मोहापस्मारौग्र्यादिव्यभिचारिणः स्वयं वान्ये महतामुत्तमा-नामनुभावव्यभिचारिणो न स्युः ॥ ३० ॥

अथ शान्तरसमाह ॥ सम्यगिति ॥ वैराग्यं संसारभीरु-तादिभवं सम्यक् ज्ञानं तस्माद्विभावात्समुत्थानं उत्पत्तिर्यस्य स तथाविधः शान्तो नाम रसः स्यात् ॥ कथंभूतो निस्पृहनाय-को निःस्पृहः निरीहो नायको यस्य स तथा अस्य स्थायी यथा। रागद्वेषपरित्यागात् तृष्णाक्षयात् स्थायिनः सम्यग्ज्ञानस्य चो-द्भव उदयः स्यात् संयमनियमादयोऽनुभावाः धृतिस्मृतिनिर्वेदम त्यादयो व्यभिचारिणः स्वसमं ज्ञेयाः ॥ यथा ।

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ॥
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
कदा पुण्येरण्ये जिनजिनजिनेति प्रवदतः ॥ १ ॥

अपि च ।